# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA.

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

Atharvana Upanishads, (Sanskrit) Fasc. I—V @ /10/ each .. Rs.
Ásvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each ..
Agni Purána, (Sans.) Fasc. I—XIV @ /10/ each .. ..
Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each ..
Aphorisms of Śáṇdilya, (English) Fasc. I .. .. ..
Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each ..
Brahma Sútras, (English) Fasc. I .. .. .. ..
Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. ..
Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. IV, VI, VII & IX @ /10/ each
Ditto (English) Fasc. II—III @ /10/ each .. ..
Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each ..
Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each ..
Chaturvarga Chintámaṇí, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—9, @ /10/ each Fasc. .. .. .. ..
Chhándogya Upanishad, (English) Fasc. II .. .. ..
Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. ..
Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each ..
Gopála Tápaní, (Sans.) Fasc. I .. .. .. ..
Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each .. ..
Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. ..
Kátantra, (Sans.) Fasc. I—VI @ 1/ each .. .. ..
Kathá Sarit Ságara, (English) Fasc. I—XI @ 1/ each .. ..
Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each .. ..
Ditto (English) Fasc. I—II @ 1/ each .. ..
Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) ..
Mímámsá Darśana, (Sans.) Fasc. II—XVI @ /10/ each .. ..
Márkaṇḍeya Purána, (Sans.) Fasc. IV—VII @ /10/ each .. ..

*(Continued on third page of cover.)*

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES,

Nos. 494, 506, 508, 517, 526 and 538.

# THE NIRUKTA.

WITH COMMENTARIES.

EDITED BY

PAṆḌIT SATYAVRATA SĀMAŚRAMĪ.

VOL. II.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1885.

विषया एव द्रष्टव्याः। तद्यथा,—य एवोत्कटिक उरसा वा गच्छति, स एव कसतीत्युच्यते; नेतरो य ऊर्द्धो गच्छति। तथा च,—य एव* निम्नेन प्रदेशेन कश्चिदचेतनो लोष्टादिरन्यो† वा चेतनः पुरुषादिः अकामकारेण गच्छति, स एव लोटत इत्युच्यते‡; नान्यः। तथा च,— यदेव द्रवद्रव्यं किञ्चित् स्रवति, तदेव स्रोतत इत्युच्यते; नान्यत्। एवं गच्छतिकर्मणा सेकार्थत्वेऽपि सति प्रसिद्धे सामर्थ्याद् § गमनविशेषेषु यथार्थं विनिवेशो द्रष्टव्यः। देशान्तरप्राप्तिस्तु चलनपूर्विका, सर्वेषां समानं कार्यम्; इत्यत एकार्थत्व मेषा मुक्तम्॥। सामान्यशब्दाश्च क्वचिद् विशेषवाचिनो भवन्ति, विशेषशब्दाश्च क्वचित् सामान्यवाचिनः; तदप्युपेक्षितव्यम्॥

एकार्थ मनेन समासतो नैघण्टुकं प्रकरण मनुक्रान्तम्; "अथ" इदानीं यद्व्याख्यातव्यं¶, तत् समासतः प्रतिज्ञायते।—"यानि अनेकार्थानि एकशब्दानि" पुरस्तात् समासतः सूचितानि, एतावता मर्थाना मिद मभिधान मित्येवम्; "तानि", "अतः" परम् "अनुक्रमिष्यामः" व्याख्ययेत्यभिसम्बन्धः। किंलक्षणा पुनरिह व्याख्या? इति। तदुच्यते;—

"तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि।
निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे॥"

---

* "स एव" क, ख।
† "लोष्टादिरन्या" ग।
‡ "लोठत इत्युच्यते" ग।
§ "सति प्रसिद्धिसामर्थ्याद्" ग।
|| १भा० २३९—२५७ पृ० १४ ख०।
¶ "यथाख्यातव्यं" क, ख।

यान्येतानि दयत्यकूपारादीनि पदानि * अनेकैरर्थैरुपदया-दानदहनहिंसादिभिरर्थवन्ति, यानि चैतान्यर्थजातान्युपदयादानदहन-हिंसादीनि, एकशब्दवाच्यानि; तान्येव मितरेतरविशेषणविशेष्य-भावलक्षणोपलक्षितानि, एकप्रकरणता मुपगतानि; एवम्प्रकारया ऐकपदिकप्रकरणव्याख्यया † 'अनुक्रमिष्यामः' वर्णयिष्यामः ‡। अन्वा-र्थस्याप्रतीयमानस्य पर्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या; शब्दस्यापि व्युत्पादनं व्याख्या। एव मेते द्वे व्याख्ये। तयोरर्थपरि-ज्ञान मेकस्याः कार्यम्; शब्दपरिज्ञान मेकस्याः। तदेतदुभय मस्मि-न्नेकस्मिन् नैगमे पदे यथासम्भवं व्याख्यास्यते §॥

आह;— किं मनेकार्थान्येव केवलानि अस्मिन् प्रकरणे व्याख्या-यन्ते? नेत्युच्यते;—"अनवगतसंस्कारांश्च निगमान्"। 'अनवगत-संस्कारान्' अविज्ञातसंस्कारानित्यर्थः। येषां प्रकृतिप्रत्ययादिसंस्कारो न साकल्येन ज्ञायते ‖, तांश्च निगमान् अत्रैव ¶ व्याख्यास्यामः। पूर्व्वाणि चानेकार्थानि अनवगतसंस्कारांश्चेति च-शब्दः॥

तदेतदेवम्प्रकारं प्रकरणं यत्रैतदुभयं व्याख्यायते, "तद्" "ऐकपदिकम्" "इति" अनेन नाम्ना अन्येऽप्याचार्य्याः "आच-

---

* "दयते" १भा० २९६ पृ० (२९)। "अकूपारस्य" १भा० २९७ पृ० (२२)। आदिशब्दः प्रकारार्थः। तथा च "जहा"—प्रभृतीनि, "ऋबीसम्"—इत्यन्तानि (१भा० २८८—४५८ पृ०) बोध्यम्।

† "एकपदिकं प्रकरणव्याख्यया" क, ख।

‡ "वर्णयिष्याम इत्यर्थः" ग।

§ १४९ पृ० २ पं० "§" टीका च द्रष्टव्या।

‖ "ज्ञापितः" ग।

¶ "तत्रैव" क, ख।

धानं वा स्यान्मर्यादा (मर्यैरादीयते
मर्यादिनोर्विभागो मेथतिराक्रोशकर्म्मा
क महं जातु कोऽस्मद्भीतः पलायते
भवति यन्निधीयते पाश्या पाशसमूहः प
तेर्विपाशनात् ॥ २ ॥

कतमः पुनरसौ निगमः? इत्याह;—"को नु मर्
६,२,४९,२)"—इति। त्रिशोकस्येय मार्षम्। गायत्री
महदुक्थे त्र्यचाशीतिषु शस्यते। अस्या ऋचि जहेत्यस्य
त्तरपदाविरोधा†-प्रकरणशब्दसारूप्यार्थोपपत्तिभिः संस्कार
ञ्जति हन्तेरेव विशेषेणार्थोऽवतिष्ठते, न जहातेः। कथ
शृणु;—'मा' 'नः' 'एकस्मिन् आगसि' 'वधीः' हे
'मा' 'द्वयोः' आगसोः वधीः। 'उत' अपि च 'त्रिषु' आ
मा वधीः। 'भूरिषु' अपि अपराधेषु 'मा वधीः' इति ‡
स्मिन् प्रकरणे ब्रवीति "को नु मर्या:"—इति। हे 'मर्याः' म
युष्मानेव तावत् पृच्छामि,—'अमिथितः' अनाकुष्टः, परुष
किञ्चिदनुक्तः, अपि च 'सखा' समानख्यानः, 'सखायम्' एव स
ख्यान मेव सन्तम् (यथा भवता महं यज्ञे समानख्यानः
सन्तम्) 'अब्रवीत्'। को न्वेव माह? 'अमिथितः' अनाक्रुष्टो त्रु

---

* नैतन्निर्वचनं दृश्यते क-ख-ग-पुस्तकेषु।

† "पूर्वोत्तरपदाविरोधः" क, ख।

‡ "मा नु एकस्मिन्नागसि मा द्वयोरुत त्रिषु। वधीर्मा शूर भूरिषु॥"
२,४८,४।

भीतमन्दस्याख्यातः? न ह्यभीतः कश्चित् पल्यते
सार्थः ॥

अथैकपदनिरुक्तम्।—"मर्या इति" मनुष्य
इहापि चैतत् "मनुष्यनाम" एव। तथोक्ता व्युत्पत्त्या
मनुष्यो मरणधर्मा" इति †। अथ "वा" "मर्यादाभिध
"स्यात्", न मनुष्यनाम। यदा मर्यादाभिधान मेतद
तदैवमर्थवत्तास्य योजयितव्या;—"मर्यादा, मर्यैरादीयते
एषा मर्यादा,— यतो धर्मज्ञाः सन्तो यूय मनादृता
असदभियोगं सखायः सन्तो मम सख्युर्हंत्त मा वधी
नैतन्न्याय्य मित्यभिप्रायः। "मर्यादा, मर्यादिनोर्विभागः"।
या भूमिरपचीणा, सा मर्यैत्युच्यते (विषयान्त इत्यर्थः); आदि
विषयस्योपक्रमस्योच्यते। संश्रितायाश्च ‖ भूमेरादेश्च विभागका
या भूमिः, सा मर्यादेत्युच्यते। "मेथतिराक्रोशकर्मा"। च
पत्योऽश्व मभिमेथतीति प्रसिद्ध मश्वमेधे मेथतेराक्रोशकर्मत्व
लोकेऽपि च खालो ¶ मेथनक इत्युच्यते; स ह्यभीक्ष्ण माक्रुश्यते
आक्रोशति च सः ॥

"अपापकम्"—इत्यस्य भाष्यपदस्यापरो व्याख्यामार्गः;—को न्वेवं
ब्रूयादपापकं सन्तं मा वधी रिति? जघान क महं जातु पापक

---

* १भा० १८० पृ० (११)

† पुरस्तात् २१५ पृ० ८ पं०।

‡ क-ख-नाम-वृत्तिपुस्तकयोश्च नास्त्येतन्निर्वचनम्।

§ "हता" ग।

‖ "हतायाश्च" ग, रोथसङ्गृहीते च।

¶ "स्यालो" ग। खलमध्ये स्थितो धान्यमर्दनाय प्रोथितो गवादिबन्धनदण्डः।

तः पलायते? न कश्चिदपि; सौम्योऽह

बन्धादिन्द्र * एवायम् † ॥

ने प्रकरणपूर्वोत्तरपदाविरोधशब्दसारूप्यार्थो-

णार्थोऽवतिष्ठते, न जहातेः; जहातौ ह्येतस्मिन्

र्वोत्तराणि च पदानि विरुध्यन्ते शब्दसारूप्येऽपि

जहातेरवकाशोऽस्ति, पारिशेष्यात् हन्तेरेतद्रूप

।

वेवानवगतसंस्कारेषु योज्यम् ॥

—इति †। एतत् पद मनवगतसंस्कारावसरप्राप्तं

पदिकव्याख्याधर्मेण प्रकृतानुवृत्त्या स व्याख्यातव्य इति

येयनिगमनिर्वचनानुक्रमप्रवृत्त्या ब्रूमः ;—"निधा पाश्या

। पर्यायेण तत्त्ववचनम्। यो वालमयः स्नायुमयो वा

क्षिग्रहणार्थं, स पाशेत्युच्यते। अधुना द्वावप्येतौ शब्दौ

धा-शब्दं पाश्या-शब्दञ्च।—"यत्" यस्मात् इयं "निधी-

चैर्धार्यते पक्षिग्रहणार्थम्। तस्मात् निधि रिति प्राप्ता,

वा। सेय मेवं प्राप्ता सती निधेत्यनवगतसंस्कारेणोच्यते।

ब्दं पर्यायाभिधानप्रसक्तं निर्ब्रवीति प्रत्ययोत्पादनार्थम्;—

पाशसमूहः" इति। पदान्निष्कृष्य तद्धितार्थो निरुक्तः;

पदार्थं निर्ब्रवीति ;—"पाशः पाशयतेर्विपाशनात्"; तेन हि

मतिशयेन वा पाश्यते बध्यत इत्यर्थः ॥ २ ॥

---

"या च का च बलकृति रिन्द्रकर्मैव तत्"—इति द० का० ७, २, २।

ग-पुस्तके तु एतदनन्तरं "चिशाकस्याद्यस्येव मार्षम्"—इत्यधिकम।

१भा० ६८९ पृ० ९ पं०।

48

[पूर्वषट्कम्,

ायते ॥ इत्येष सम-

ामसु पठितम् *,

पत्तिः ;—"मर्यो

नम्" एव अत्र

भिप्रेतं भवति,

ते" †। का नु

अनाकुष्टाश्च

:? इति ;

श्रिता ?

रन्यस्य

तेरिणी

क्षः

म्।

वयः॑ सु॒प॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः। अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्द्धि चक्षु॑र्मुमु॒ग्ध्य१स्मा-न्नि॒धये॑व ब॒द्धान्। वयो वेर्बहुवचनं (सुपर्णाः*) सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमाना अपोर्णुह्या-ध्वस्तं चक्षुश्चक्षुः ख्यातेर्वा चष्टेर्वा पूर्द्धि पूरय देहीति वा मुञ्चास्मान् पाशैरिव बद्धान् पा॒र्श्वतः श्रोणि॒तः शि॒ता-म॒तः पार्श्वं पर्शुमय† मङ्गं भवति पर्शु‡ स्पृशतेः संस्पृष्टा पृष्ठदेशं पृष्ठं स्पृशतेः संस्पृष्ट मङ्गैरङ्ग मङ्कना§ दञ्चनाद्वा श्रोणिः श्रोणतेर्गतिचलाकर्मणः श्रोणिश्चलतीव गच्छतो दोः शितामं भवति दोर्द्रवतेर्योनिः शितामेति शाक-पूणिर्विषितो भवति श्यामतो यकृत्त इति तैटीकिः श्यामं श्यायतेर्यकृद् यथा कथा च कृत्यते॥ शितिमां-सतो मेदस्त इति गालवः शितिः श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिन्त्सीदतीति वा मेदो मेद्यतेः॥ ३॥

अधुना यस्मिन् मन्त्रे निधा-शब्दः पाशसमूहवाची, त मानीय ब्रवीति; निधाशब्दनिगमार्थम्। कतमः पुनरसौ मन्त्रः? इत्याह;—"वयः॑ सु॒प॒र्णा" इति ¶। शात्त्यस्य गौरिवीतेरिय मार्षम्।

---

* नास्त्येतत् पदम् क-ख-ग-पुस्तकेषु।

† "परशुमय" क, ख, ग ङ।

‡ "परशु" क, ख।

§ "मङ्कना" क, ख, ग।

|| "कृत्यते" क, ङ।

¶ ऋ० सं० ८, २, ४, ९।

त्रिष्टुप्। अग्निष्टोमे मरुत्वतीयशस्त्रस्य परिधानीयैषा निविद्धानीये सूक्ते। 'वयः' "आदित्यरश्मयः"। "वेतेः"* गत्यर्थस्य (अदा० प०) नामीभूतस्य "बहुवचनम्"; विः, वी, वयः इति। 'सुपर्णाः' "सुपतनाः" एत एव "उपसेदुः"। उपसीदन्ति व्युष्टायां रात्रावहन्यहनि। क मुपसेदुः? 'इन्द्रम्' आदित्यम्। 'प्रियमेधाः' प्रिययज्ञाः। त एव यज्ञसहचारित्वात्; उद्गतेषूदितेषु हि तेषु यज्ञास्तायन्ते। 'ऋषयः' त एव, अर्षणात्†; प्रकाशकत्वात्। 'नाधमानाः' त आदित्य मुपसेदुः‡। क मर्थं "याचमानाः"? इति। "अपोर्णुहि" अपावृणु जनाना मेतत् 'ध्वान्तम्' "आध्वस्तम्", आच्छादितं तमसा। 'चक्षुः' 'पूर्द्धि' "पूरय"; युष्मदननुगृहीत मसफल मिवैतेषां जनाना मेतच्चक्षुः§, तत् पूर्द्धि, सफलं कुर्वित्यर्थः। अथवा 'पूर्द्धि' "देहि" इति। यदुक्तं स्यात् अस्तं हि गच्छता त्वया एतेषां जनाना माप्त मिव‖ यच्चक्षुः, तत् पुनरुद्यंस्त्व मेतेभ्यो¶ जनेभ्यो देहि। कथं च पुनर्देहि? 'मुमुग्धि अस्मान्' "मुञ्चास्मान्" 'निधया' "पाशैः" पाशसमूहेन पक्षिणः "इव" एतस्मिन् मण्डले "बद्धान्"। यावदेतत्तावदशेषं तमो नाशयित्वा एतेषां जनाना मेतच्चक्षुर्दद्मः, सफलं वा कुर्मः। एवं ह्येतत् त्वयैव दत्तं भविष्यतीत्यभिप्रायः। एत मर्थं याचमाना उपसेदुः॥

---

* मूलपाठस्तु "वेः" इत्येव।

† "ऋषणात्" ग।

‡ "नाधमानास्त मुपसेदुः" क।

§ "यच्चक्षुः" क, ख।

‖ "जनाना मिव" रोथ्-मु० पाठः।

¶ "तदुद्यंस्त मेतेभ्यो" क, ख। "तदुद्यन्नेतेभ्यो" रोथ्-मु० पाठः।

"चक्षुः", "ख्यातेर्वा" दर्शनार्थस्य; "चष्टेर्वा" दर्शनार्थस्यैव। एव मेतस्मिन् मन्त्रे 'मुमुग्ध्यस्मान्निधयेव बद्धान्'—इत्येतेषां पदानां मध्ये वर्त्तमानस्य तृतीयान्तस्य निधा-शब्दस्य पाशसमूहादन्यः कोऽर्थः स्यात्?—'मुमुग्धि', 'बद्धान्'—इत्येतौ शब्दौ येन बद्धाः, यस्माच्च मुच्यन्ते, तदर्थाभिधायिनं शब्द माकाङ्क्षतः। तत्रैवं सति वर मविद्यमानस्याध्याहाराद् विद्यमानस्य, निधाशब्दस्य, अनयोः शब्दयोर्मध्ये वर्त्तमानस्य, आकाङ्क्षितार्थाभिधायकत्वकल्पना इति निधाशब्दः पाशसमूहाभिधायित्वेऽवतिष्ठते; इतरथा ह्यय मितरैः पदैरसम्बध्यमानोऽनर्थक एव स्यात्। तस्मादेवं सर्वत्रानवगतसंस्काराणा मसिद्धार्थानां पदानां सामर्थ्यादाकाङ्क्षितरूप एवार्थोऽवस्थानं भवति; तदुपपाद्यं सर्वत्र; ग्रन्थातिगौरवभयात्तु सङ्क्षेपतोऽत्र दर्शयिष्यामः॥

"शिताम(२)"—इति *। एतदनवगतम्। अनुपन्यस्यैव पदम्, अभिधेयं चानुक्त्वैव निगम मेव प्रथमं पठत्याचार्यः। विप्रतिपत्त्यानेकार्थत्व मस्येति। "पार्श्वतः श्रोणितः शितामतः"—इति निगमः (य॰मा॰सं॰२१,४३)। पशुहविषः प्रैषेऽयं मन्त्रशेषः। कतमः पुनरसौ प्रैषः? "होता यक्षदिन्द्राग्नी"—इति †। सर्व एव गद्यः। वामदेवस्यार्षम्। मैत्रावरुणो ब्रवीति। 'होता यक्षत्' होता यज-

---

* १भा॰ ३८९ पृ॰ ९ पं॰।

† "होता यक्षदश्विनौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतम्पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणा मग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाश्विना जुषेताꣳ हविर्होतर्यज॥" य॰ मा॰ सं॰ २१, ४२।

त्यर्थः। तेन चेज्यमानौ 'इन्द्राग्नी', * अस्मात् 'हविषः' पश्चाख्यात् 'मध्यतः' यदेतत् 'मेदः' 'उद्भृतम्', अस्यां स्रुच्यां हितम्। तस्मान्मेदः पर्यस्यति, अपयति, त्रेधा मेदः करोतीति ह्युक्तम्। एतन्मेदः 'अद्य' एतस्मिन्नहनि सद्यः उद्भृतम् 'आत्ताम्' भक्षयेताम्। 'पुरा द्वेषोभ्यः' हविर्मथिभ्यः पिशाचादिभ्यः। 'पुरा पौरुषेय्या गृभः' अर्वागिड़ावदानात् † : इडा हि ‡ पुरुषार्थं गृह्यते, प्राक् तस्माद् ग्रहणात्। 'इन्द्राग्नी' 'घस्तां' भक्षयेतां, 'नूनं' निश्चयेन। एतस्मिन् 'घासे' घसनकाले, भक्षणकाले प्राप्ते 'अज्राणाम्' अनभिभूतानां रक्षोभिः आदरेण प्रतिविशिष्टैर्मन्त्रैः संस्कृतानाम् §। अथ वा 'घासेअज्राणाम्' इत्येकं पदम् ‖। तदाय मर्थः ;— घासे हि सति पशवो न जीर्य्यन्त इति 'घासेअज्राः'। 'यवसप्रथमानां' यवसः अशनम्, तस्य अनेकप्रकारस्य श्रेष्ठत्वादेतान्येव देवत्वप्रसंगे प्रथमानि; तेषां यवसप्रथमानाम्। 'सुमत्क्षराणाम्' स्वय मेवैतानि भक्ष्यमाणानि स्वादुत्वादुदरं प्रति क्षरन्तीति सुमत्क्षराणाम्। 'शतरुद्रियाणाम्' बहुस्तुतीनाम्। अथ वा 'शतरुद्रियाणां' बहुशो रुग्णानाम् ¶। 'अग्निष्वात्तानाम्' अग्निष्वात्तादीनाम्, अग्निपाकेन मृदुत्वात् स्वादूकृतानाम्। 'पीवोपवसनानाम्' पीव्ना छागेन, उपवस्तानाम्; अथ

---

* शाखाविशेषे 'इन्द्राग्नी' एव; माध्यन्दिन्यां तु 'अश्विनौ' इति।

† "अर्वागिलावदानात्" क, ख।

‡ "इला हि" क, ख।

§ "सम्भृतानाम्" क, ख।

‖ "हलदन्तात् (पा० ६, ३, ९)"—इत्यादिना सप्तम्या अलुकि "प्रकृत्यान्तः (पा० ६, १, ११५)"—इति प्रकृतिभावे च रूपम्।

¶ "बहुशोरुग्णानाम्" क, ख।

वा पीवानं छाग मुपगम्योषितानाम् *। 'पार्श्वतः' अङ्गात् 'अवत्तानाम्'। 'श्रोणितः' अवत्तानाम्। 'शितामतः' अवत्तानाम्। 'उत्सादतः' च उच्छेदनस्थानात् 'अङ्गादङ्गात्' अवत्तानाम्। 'करतः' कुरुताम् इन्द्राग्नी! तृप्तिम् एतेषाम् एवंलक्षणाना मवदानानाम् †। हे 'होतः'! यथैताविन्द्राग्नी 'जुषेताम्' आसेवेताम्, एतत् 'हविः'। तथा त्व मपि 'यज' ॥

निगमप्रसक्त मुच्यते;—"पार्श्वं पर्शुमय मङ्गं भवति"। पर्शवो वङ्क्रय उच्यन्ते; तन्मयं हि तद् भवति पार्श्वपदलक्षणम् ‡। आह;— पर्शुः कस्मात्? उच्यते,—"पर्शुः, स्पृशतेः"। आह;— किं मनया स्पृष्टम्? इति। उच्यते,—"संस्पृष्टा पृष्ठदेशम्" प्रति भवति। आह;—"पृष्ठं" कस्मात्? उच्यते,—"स्पृशतेः" (तु० प०) एव; तद्धि "संस्पृष्ट मङ्गैः"। आह;—"अङ्गम्" कस्मात्? उच्यते,—"अङ्कनात्"; अङ्कितं § हि तत् कालेन भवति ‖, गत मित्यर्थः (भू० प०)। "अञ्चनाद्वा"। अञ्चतिरपि गत्यर्थ एव (भ्व० प०)। धात्वन्यत्व मर्थैकत्वम्। पार्श्वशब्द-प्रसक्तानुप्रसक्त मुक्तम्। अधुना श्रोणिशब्दं निगमप्रसक्तं निर्ब्रवीति;— "श्रोणिः श्रोणतेः" धातोः "गतिचलाकर्मणः" (भू० प०)। गति-

* "पीवोवसनानाम्। पीवस् शब्दोऽसुन्नन्तः स्थूलवाची। पीवसां स्थूलाना मङ्गाना मुप समीपे वसनं स्थितिर्येषां, तानि पीवोपवसनानि, तेषां स्थूलाङ्गसमीपस्थितानां छागाणा मित्यर्थः। "उपवसने पीवः (३, १, १२)"—इति प्रातिशाख्यसूत्रेण पीवसो विसर्गलोपः"—इति महीधरः।

† "मवदातानाम्" क, ख।

‡ "पार्श्वपटलम्" ग।

§ "अक्कनात्; अक्कितं" ग।

‖ "अक्तेति क्षिप्रनाम, अञ्चित मेवाङ्कितं भवति।"—इति अत्रैवोपरिष्टात् वक्ष्यति (नैग० का० ५, २, ५)।

निमित्तं चलनं यस्य कर्म, सोऽयं गतिचलाकर्म, तस्य गति-चलाकर्मणः। किं कारणम्? "श्रोणिश्चलतीव" स्थानात् पशोः "गच्छतः" ॥

शितामशब्दस्य तत्त्व माचष्टे;—"दोः शितामभवति" बाहु-रित्यर्थः। आह;— दोः कस्मात्? उच्यते;—"दोः", "द्रवतेः" (भू०प०); तस्य हि प्राणेन पशु द्रवति। शित मंसभावेन एत-त्कार्यं भवतीति शितामः। यदा दोर्विषये शितामशब्दः, तदैवं निर्वक्तव्यः। आह;— कयोपपत्त्या दोः शितामशब्देनोच्यते? शृणु;— पशोर्हि बाह्यानि चावदानानि, आभ्यन्तराणि च भवन्तीति। तत्र, पशोः पार्श्वे श्रोण्यावंसाविति बाह्यानि; जिह्वाहृदयक्रदादीनि * आ-भ्यन्तराणि। तत्रैवं सति पार्श्वतः श्रोणितः इत्येतयोरन्तरा वर्त्तमानः शितामशब्दः कि मन्यद् दोष्णोऽभिदध्यात्। प्रायो † हि नियामको भवति। एवं बाह्यावदानप्राये च शितामशब्दो वर्त्तते इति दोर्विषयः कथ्यते।　　　　। "योनिः शितामः"—"इति" "शाकपूणिः" आचार्यो मन्यते। तत्र योनिः अनवदानीया एव ‡। योनिसमानदेशस्तु गुदो नामावदान मस्ति, स योनिशब्देनोच्यते। स च गुदः "विषितो भवति"। 'विषॢ व्याप्तौ' (जु०उ०); व्याप्तः स पुरीषेण भवति। अथवा विषितमांसो विपुषितमांसः, विस्रस्तमांसः, स भवति। आह;— कयोपपत्त्या शाकपूणेर्मते योनिः शितामशब्देनोच्यते? इति। शृणु;— स हि श्रोण्यनन्तरो भवति; श्रोण्यनन्तरश्च शितामशब्द

---

* "जिह्वाहृत्क्लदादीनि" ग।

† 'प्रायः' अभिप्रायः।

‡ शाकपूणिमते योनिरप्यवदानीयेत्यस्माकम्।

उच्यते,— श्रोणितः शितामत इति। शब्दसारूप्य मपि च किञ्चि-दस्ति,— विषितो भवति, शितामेति। अनयोपपत्त्या अनेन च शब्दसारूप्येण योनिः शिताम इति शाकपूणिर्मन्यते। । "श्यामतो यकृत्तः"—"इति" "तैटिकिः" आचार्यो मन्यते। यदुक्तं भवति श्यामत इति, तदुक्तं भवति शितामत इति। एवं हि बहुतरं शब्दसारूप्यं लभ्यते। एवञ्च सति यकृत्त एतदवदानं चोदितं स्यादिति गम्यते। किङ्कारणम्? तद्धि "श्यामं", "श्यायतेः" (भ्वा० आ०) धातोः; तद्धि सम्पर्कादुपपद्यते। आह;—"यकृत्" कस्मात्? उच्यते,— तद्धि मृदुत्वात् "यथा कथा च" अयत्नेनैव "कृत्यते" क्रियत इत्यर्थः। । "शितिर्मांसतो मेदस्तः"— "इति" "गालवः" आचार्यो मन्यते। श्वेतान्मांसात्* 'शितिर्मांसतः'। कतमत् पुनस्तत् श्वेतं † मांस मिति? उच्यते,— 'मेदस्तः'। तस्मात् यदुक्तं भवति शितिर्मांसत इति, तदेवोक्तं भवति शितामत इति। अत्र मपि बहुतरं शब्दसारूप्य मस्ति। "शितिः", "श्यतेः" तनूकरणार्थस्य (दि०प०); परो हि विवेकस्तेजसो मेदस्येवावतिष्ठते। "मांसं", "माननं वा" य एव हि मान्यो भवति, तदर्थ मेतत् संस्क्रियते ‡। "मानसं वा"; सुमनसा हि तदुपादीयते §। अथ वा य एव हि मनस्विनो भवन्ति, तैरुपादीयते। "मनोऽस्मिन् सीदतीति वा"

---

* "श्वेतान्मांसात्" ग।

† "श्वेतं" ग।

‡ अत एवातिथिर्गौश्च उच्यते।

§ य० मा० सं० २१, ४३ मन्त्रे "यवसप्रथमानाम्"— इत्यस्य व्याख्यानाभिप्रायतो महीधरेणोद्धृत्योक्तः,— 'एतद्वै परम मन्नाद्यं यन्मांसम्— इति श्रुतिः'।

सर्वस्यैव हि मांसे मनः सीदति *। "मेदः" "मेद्यतेः" स्नेहनार्थस्य † ॥

एव मेष शिताम-शब्दोऽनवगताभिधेयोऽनवगतसंस्कारोऽपि । एव मेतस्मिन् प्रकरणे अन्यान्यनवगतसंस्कारानि उपेक्षितव्यानि । उक्तं हि,—

"शब्दरूपं पदार्थस्य व्युत्पत्तिः प्रकृतिर्गुणः ।
सर्व मेतदनेकार्थे दृशानवगमे गुणाः ॥"—इति ।

कतमे पुनस्ते ? इति । पद(१)जात्य(२)भिधेय(३)स्वर(४)संस्कार(५)गुण(६)विभाग(७)क्रम-(८)विक्षेपा(९)ध्याहार(१०)व्यवधानानि । तेषु चाभिधेय मपेक्ष्य निर्वचनं कर्त्तव्यम् ‡ । उक्तं हि,—

"धातूपसर्गावयवगुणसत्त्वं हि धातुजम् ।
बह्वेकधातुजं वापि पदं निर्वाच्यलक्षणम् ॥
धातुजं धातुजाज्जातं समर्थार्थज मेव च ।
वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् ॥"—इति ।

(१)पदजात्यनवगतम्,—"त्व" इति § यथा ; नाम, निपातो वा ?

(२)अभिधेयानवगतम्,—"शिताम" इति ‖ यथा ।

---

* "अश्विनोश्छागस्य हविषः प्रिया धामानि"—इत्यादि य० मा० सं० २१, ४६ ।

† "अग्ने मेदसो घृतस्येति मेदसस्य हि घृतस्य च भवन्ति"—इति ; "सा वा एषा रेत एव यद् वपा प्रेव वै रेतो लीयते प्रेव वपा लीयते, शुक्लं वै रेतः शुक्ला वपा ऽशरीरं वै रेतो ऽशरीरा वपा"—इत्यादि च ऐ० ब्रा० २, २, ३-४

‡ "वक्तव्यम्" क, ख ।

§ पु० ६२ पृ० ७ पं०—६५ पृ० १८ पं० । पुनः ६७ पृ० ५ पं० = ६९ पृ० १७ पं० ।

‖ १भा० २८९ पृ० (२) । अस्मिन्नपि भागे पु० ३८० पृ० १२ पं० ।

(३)स्वरानवगतम्,—"वने न वायो" इति * यथा ।

(४)संस्कारानवगतम्,—"ईर्मान्तासः" इति † यथा ।

(५)गुणानवगतम्,—"करूळती" इति ‡ यथा ।

(६)विभागानवगतम्,—"मेहना" इति § यथा ।

(७)क्रमानवगतम्,—"उप रमध्वं मे वचसे" इति || यथा ।

(८)विक्षेपानवगतम्,—"द्यावा नः पृथिवी" इति ¶ यथा ।

(९)अध्याहारानवगतम्,—"दानमनसो नो मनुष्यान्" इति यथा।

(१०)व्यवधानानवगतम्,—"वायुस्व नियुत्वान्" इति ** यथा।

एक मपि पदं पदद्वितयं क्रियते,—"पुरुषादः, पुरुषानदनाय" इति †† यथा ।

पदद्वितय मपि चैकं पदं क्रियते,—"गर्भनिधानीं सनितुः" इति ‡‡ यथा ।

आख्यात मपि च नाम क्रियते,—"सर्वाणीन्द्रस्य धनानि विभक्ष्यमाणाः" इति यथा ।

एव मेष शब्दार्थसङ्करोऽनेकप्रकार उपेक्ष्यः; दृष्टानुविधानात् छन्दसि यथासम्भव मनुविधेयः ॥ २ ॥

---

* ऋ० सं० ७,७,२२,१ । ऐ० ब्रा० ५,२ ।

† १भा० २९२ पृ० (१४) । अत्राप्यध्याये प० २ पा०, ५ ख० ।

‡ १भा० ४५५ पृ० (१२२) । परस्ताच्च ६,६,१ ।

§ १भा० २८९ पृ० (४) । इत उत्तरस्मिन्नपि खण्डे (४,१,४) २८७ पृ० ।

|| पुरस्तात् २४१ पृ० १८ पं० । ऋ० सं० २,२,१२,५ ।

¶ ऋ० सं० २,८,१०५ । परस्तात् दै० का० ९,४,१ ।

** परस्तात् ५,५,४ । ऋ० सं० ५,४,६,२ ।

†† पुरस्तात् १८१ पृ० ५पं०, ७पं० । ऋ० सं० ७,७,१९,२ ।

‡‡ पुरस्तात् २७५ पृ० ८ पं० । ऋ० सं० २,२,५,२ ।

यदिन्द्र चित्र मेहनास्ति त्वादात मद्रिवः। राधस्तन्नो विदद्वस उभया हस्त्याभर। यदिन्द्र (चित्रं*) चायनीयं† मंहनीयं धन मस्ति यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि त्वया नस्तद्दातव्य मद्रिवन्नद्रिरादृणात्येतेनापि‡ वात्तेः स्यात्ते सोमाद इति ह विज्ञायते राध इति धननाम राध्नुवन्त्येनेन§ तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्या माहरोभौ समुब्धौ भवतो दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मनो‖ मनोतेः ॥ ४ ॥

"मेहना(४)"—इति¶। एतदनवगतम्। "मंहनीयम्"इति अवगमः। "यदिन्द्र चित्र मेहना" **—इति निगमः। अत्रेर्भौमस्यार्षम्। अनुष्टुप्। ऐन्द्री। स्वरपृष्ठानां स्वरसाम्नां प्रथमे स्वरसाम्नि "यज्ञा-

---

* "चित्र" ङ। बन्धनीचिह्नान्तर्गतं पदं न दृश्यते क-ख-ग-पुस्तकेषु।

† "चायनीय" ख, ङ।

‡ "रादृणात्यनेनापि" ङ। "रादृणात्येनेनापि" च।

§ राध्नुवन्त्येतेन' क, ख।

‖ "स्यान्मना" च।

¶ १भा० २८९ पृ० १४ पं०।

** ऋ० सं० ४,२,१०,१ = सा० सं० उ० आ० ४,२,१,४।

२र २
यथा अपूर्व्य" इति* स्तोत्रियः†; स्वरपृष्ठानां "यदिन्द्र चित्र मेहना"
१ २ ३ २ ३ १ २ ३क
इति ‡ द्वे§; "या इन्द्र भुज आभरः" इति ‖ तृतीयानुरूपस्येति¶ विनियोगः। हे "इन्द्र"! 'चित्रम्' "चायनीयम्" पूजार्हम्**, "यत्" 'मेहना' "मंहनीयं" पूजार्हम्, तव 'राधः' "धनम्" "अस्ति" किञ्चित्, 'त्वादातं' "त्वया" च "दातव्यम्" एवावश्यं सुचिर मपि स्थित्वा "नः" अस्मभ्यम् "तद्" यतः, अतो ब्रूमः,—हे 'अद्रिवः' वज्रिन्! "तत्" "नः" राधः हे 'विद्द्वसो' आप्तधन!†† साम्प्रत मेव "उभाभ्यां हस्ताभ्याम्" अकृपणम् 'आभर' "आहर"; मा चिराय

---

१ २र २
* यज्ञायज्ञा वो अग्नये इत्यस्या ऋचि (सा० सं० आ० आ० २, ७.) गीतानि चत्वारि सामानि (सा० सं० आ० गा० ३, २, ९—१२) स्वरसञ्ज्ञकानि। तान्येव गवामयनसत्रादौ अभिजिद्विषुवतोर्मध्यगेष्वहःसु त्रिषु आर्भवेषु पवमानेषु अनुष्टुप्सु गीतानि चेत् स्वरसामानीत्युच्यन्ते, बृहद्रथन्तरपृष्ठस्तोत्रीयेषु गीतानि चेत् स्वरपृष्ठानीत्युच्यन्ते। तेषाञ्च विधायकम्,—"स्वरसामान एते भवन्ति"—इत्यादि ता० ब्रा० ४, ५।

† "स्तोत्रियस्तृचो भवति"—इति ता० ब्रा० १४, १ ७। "एकं साम तृचे क्रियते स्तोत्रियम्",—इति मी० अ० ९ २, ३। "स्तोत्रियानुरूपौ तृचौ भवतः"—इति च ता० ब्रा० ११, ६, ६।

‡ सा० सं० छ० आ० ४,२,१ ४; उ० आ० ४,२,१४,१। तत्र तत्र पुनरेवं
१ २ २२उ ३
पाठः,—"यदिन्द्र चित्र म इह नास्ति" इति।

§ द्वे सामनीति यावत्। ते च यदिन्द्र चित्रेति मूलके ऊ० गा० ४,१,१९; २२, २, १९।

‖ सा० सं० छ० आ० ३,२,२,२।

¶ "पूर्वं सु चैव तद्रूप मपरेण रूपेणानुवदति। यत् पूर्वरूप मपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वम्"—इति ता० ब्रा० ११,६,४। अपरञ्च च तत्रैव बहुत्र।

** "चित्र चायनीय! पूजार्ह!" क, ख।

†† "वित्तधन!" इत्येवं यास्कीयव्याख्यानम्।

इत्यभिप्रायः। अथ "वा" "यन्म इह नास्तीति" एतस्मिन् वाक्यैकदेशे "त्रीणि" "पदानि" "मध्यमानि" मध्ये भवन्तीत्यर्थः। कथं मेहना इत्येषा संहिता,—'मे–इह–न' इति? एतान्यस्याः संहितायाः पदानि। एव मेष वाक्यावयवः पञ्चपदो भवति। अत्र 'यत्'—इति प्रथमं पदम्, अतः परं 'मे', 'इह', 'न'—इत्येतानि त्रीणि मध्यमानि पदानि, 'अस्ति'—इति पञ्चमं पदम्। एव मभिप्रेत्य "इन्द्र-चित्र"-शब्दादपकृष्योक्तं "त्रीणि मध्यमानि पदानि" इति। आह;—यद्येवम् पदविभागः, तदा कोऽर्थः? इति। उच्यते,— यत् मे मम गृहे नास्ति धनम्, तव च तद् अस्ति धनम्, दातव्यञ्च त्वया तावत् स्तोतृभ्यः, तद्धस्ताभ्या मस्मभ्य माभरेति। बह्वृचानां 'मेहना'—इत्येकं पदम्। छन्दोगानां त्रीण्येतानि पदानि 'म,इह,न'—इति। तदुभयं पश्यता भाष्यकारेणोभयोः शाकल्यगार्ग्ययोरभिप्रायावत्रानुविहितौ*, एव-ञ्जातीयनिर्वचनोपप्रदर्शनार्थं मुभयोश्च प्रामाण्यख्यापनार्थम्॥

आह;—पदकारयोः पदविकल्पे कोऽभिप्रायः? इति। उच्यते,— विद्यावान्, विद्यमानधनो वा प्रतिविशिष्टतरं प्रार्थयते,—यच्च यस्य गृहे नास्ति, स तद्विशिष्ट मविशिष्टं वा प्रार्थयेत; न चानयोरुभयोरपि विशेषलिङ्ग मस्ति; तस्मान्मंहनीय मित्येतयार्थमत्या मेहनेत्येव मेकं पद मभिप्रेतं शाकल्यस्य। गार्ग्यस्य पुनर्यन्म इह गृहे नास्ति तदाहरे-त्यभिप्रायः। एव मत्र विशेषलिङ्गाभावाद्विप्रतिपत्तिः एव मन्येष्वपि शाखान्तरपदविकल्पेषु अनुविधान मर्थाविरोधेन कर्त्तव्यम्। एव मयं मेहना-शब्दो राधः शब्दसामानाधिकरण्ये वर्त्तमानो यन्मं-

---

* शाकल्यः ऋक् संहितायाः पदकारः, गार्ग्यस्तु सामसंहितायाः।

हनीयं राधः, यद्वा मद्गृहे नास्तीति धनविशेषणत्वात् क मन्य मर्थं ब्रूयात्? तस्मान्मंहनेति सामर्थ्याद्धनविशेषण मेतदित्युपपत्तिः॥

अधुना निगमप्रसक्तानि निरुच्यन्ते।—"अद्रिरादृणात्येतेन" अद्रिसारमय मेव ह्यायुधं भवतीति। अद्रिर्वज्र उच्यते। आह;—अद्रिः कस्मात्? उच्यते,—आदृणाति आदारयतीत्यर्थः। अथ वा सोमाभिषवग्रावभिस्तद्वान् अद्रिवान् स्यात्। तैरपि हि सोम आदार्यते "अपि वा" "अत्तेः स्यात्" अद्रिः। कुतः? एतन्निगमात्। कतमोऽसौ निगम इति "ते सोमाद इति ह विज्ञायते"; "ते सोमादो हरी इन्द्रस्य निंसते (ऋ०सं० ८,४,२०,४)"—इत्येतस्मिन्मन्त्रे विचार्यमाणे ज्ञायतेऽत्तेरद्रिः स्यादिति। व्याख्यात एव शेषः*। "राध" "इति" एतद् "धननाम" स्मारयति †। व्यभिचारित्वाद्वा शब्दानां धननामसु पठित मपि सदेतदवधारयति;—इहाप्येतद्धननामैव, नात्र व्यभिचारोऽस्तीति। पठिताभिधाननिरूपणेषु सर्वेष्वेतौ समाधी योज्यौ ‡। "वित्तधन" इति प्राप्तधन!। उभौ समुब्धौ भवतः; संपूर्णावित्यर्थः॥

"दमूना(५)"—इति§। एतदनवगतम्। "दममना" दमूनाः स्यात्; दमे हि नित्य मस्य मनः, अक्रूरमना इत्यर्थः। "दानमना वा" दातव्यं मयेति यस्य मनसि स वा दमूनाः। "दान्तमना वा" दमेषु दान्तेषु यमनियमवत्सु पुरुषेषु यस्य मनः, स वा

---

* पुरस्तात् १०९ पृ० ७ पं०।

† १भा० २२६ पृ० (१७)।

‡ स्मरणार्थ मवधारणार्थं वेति समाधिद्वयम्।

§ १भा० ३९०पृ० ३पं०।

दमूनाः। अथ वा "दम इति" एतद् गृहनाम" एतद् यस्य मनसि मनेद मिति, स दमूनाः "स्यात्" गृहपतिरग्निः* ॥ ४ ॥

जुष्टो दमूना अतिथिर्दुरोण इमन्नो यज्ञ मुप याहि विद्वान्। विश्वा अग्ने अभियुजो विहत्या शत्रूयता मा भरा भोजनानि॥ अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति वा गृहाणीति वा (ऽय मपीतरोऽतिथिरेतस्मादेव †) दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पा इमं नो यज्ञ मुपयाहि विद्वान्त्सर्वा अग्ने अभियुजो विहत्य शत्रूयता माभर‡ भोजनानि विहत्यान्येषां बलानि शत्रूणां भवना§दाहर भोजनानीति वा धनानीति वा मूषो मूषिका इत्यर्थो मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥

निगम;—"जुष्टो दमूना||"—इति। वसुश्रुतस्यात्रेयस्येय मार्षम्। त्रिष्टुप्। आग्नेयी। प्रातरनुवाकाश्विनयोः शस्यते स्विष्टकृत्पुरोनुवाक्या चेयं चातुर्मास्येषु साकमेधे। हे भगवन्नग्ने! 'जुष्टः' आसेवितस्त्व मस्माभिः स्तुतिभिः 'दमूनाः' दममनाः, अक्रूरमनाः भूत्वा, ततः

---

* 'मनो मनोतेः'—इत्येतद्व्याख्यात मेव स्थितम्।

† क-ख-ग-पुस्तकेष्वय मधिकः पाठः।

‡ "माहर" ग, घ।

§ "भवता" क, ख, ग।

|| ऋ० सं० ३, ८, १८, ५।

'उप याहि'। अथ वा गृहं ममेद मिति चेतोऽवस्थाप्य, तत उप याहि। अथ वा दानमना भूत्वा, दातव्य मेभ्यो मयेत्येवं चेतोऽवस्थाप्य, तत उप याहि। अथ वा दान्तेष्वेव हि तव मनो वयञ्च दान्ताः; 'अतिथिः' च त्व मग्निहोत्रिणां दान्तमनसां प्रातः सायञ्च उद्बोध्यमानो भवसि, स्वभाव एवैष तवाग्निहोत्रिणा मतिथित्वेनोपस्थातव्य मिति; अतो ब्रूमः वय मपि दान्तमनसोऽग्निहोत्रिणश्च, अस्माक मपि य एषः 'दुरोणे' यज्ञगृहे यज्ञस्तन्यते, तं त्व मुप याहि, त मागच्छ; 'विद्वान्' जानानः स्व मधिकारं भक्तताञ्चास्माकम्। किञ्च; 'विश्वाः' सर्वाः 'अभियुजः' अभितः सर्वतो युजः, अभियोक्त्र्यः, शत्रुसेनाः त्वदागमनप्रतिबन्धेन वर्त्तमानाः, 'विहत्य' नानाप्रकारं हत्वा, तत उपयाहि। किञ्च; एव मागच्छंस्त्वं शृणु यत्कुरुष्व;—'शत्रूयतां' येऽस्माकं शत्रुत्वं कामयन्ते कर्त्तुम्, तान् विहत्य, तेषां; बलानि, ततो यानि तेषां भोजनानि अन्नानि, धनानि वा, तानि अस्मभ्यम् 'आभर' आहरेति समस्तार्थः॥

निगमप्रसक्तोऽतिथिशब्दो दुरोणशब्दश्च। आह;—"अतिथिः" कस्मात्? उच्यते;—"गृहान्" "अभि" आभिमुख्येनासौ "अतितो भवति" गत इत्यर्थः। "अतति*-पतति†" इति गतिकर्मसु पठितम्। अथवैव मन्यथा स्यात्; "अभ्येति" अभ्यागच्छति "तिथिषु" पौर्णमास्याद्यासु "परकुलानि" यजमानकुलानीत्यतिथिः। "अथ मपीतरोऽतिथिरेतस्मादेव"। "दुरोण इति" एतद् "गृहनाम"।

---

* "अतति" १भा० २२७ पृ० १पं० =२४४ पृ० (३८)।

† "पतति" १भा० २२७ पृ० (२९) टीका द्रष्टव्या।

आह;—किङ्कारणम्? उच्यते;—ते हि गृहाः "दुरवा भवन्ति" अवतिस्तर्पणार्थः* ; "दुस्तर्पाः" इत्यर्थः। उक्तञ्च,—'कुटुम्बतन्त्राणि हि दुर्भराणि'—इति। एव मेतस्मिन्मन्त्रे, जुष्टः, दमूनाः, अतिथिः, विद्वान्, हे अग्ने! यज्ञ मुपयाहि! इत्येतस्मिन्नधिकारे वर्त्तमानो 'दमूनाः'-शब्दः क मन्य मग्निविशेषणादर्थं ब्रूयात्? न कश्चिदपि, परिशेषाद्दमूना इत्येतदग्निविशेषण मेवेति सिद्धम्॥

"मूषः(६)"—इति†। एतदनवगतम्। बहुवचनञ्चैतत्; मूट्, मूषौ, मूषः इत्येवम्। आह;—कुत एतत्? उच्यते;—"व्यदन्ति" इत्येतस्मिन्नाख्याते‡ बहुवचननिर्द्देशात्; 'मूषो व्यदन्ति'—इत्येतत् सम्बध्यते। "मूषिकाः—इति" अनेनावगतसंस्कारेण यः "अर्थः" उक्तः स्यात्, स एव मूष इत्युक्तो प्रसिद्धार्थेन अभिधानेन। 'मूषः'-शब्दस्य तत्त्व माख्यातम्; अधुनाऽऽख्यात-प्रसक्तस्य मूषिका-शब्दस्य निर्वचनं करोति,—"मूषिकाः पुनर्मुष्णातेः"। "मुष स्तेये (क्र्या०प०)" इति। अस्य "मूषः अपि" च "एतस्मात् एव" ते हि हरन्ति धान्यादीनि॥ ५॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः। मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारन्ते शतक्रतो वित्तं मे

---

* "अव रक्षण-गति-कान्ति-प्रीति-तृप्त्यवगम-प्रवेश-श्रवण-स्वाम्यर्थ-याचन-क्रियेच्छा-दीप्त्यवाप्त्यालिङ्गन-हिंसा-दान-भाग-वृद्धिषु" भू० प०।

† १भा० ३९० पृ० ९पं०।

‡ इत उत्तरस्मिन्नेव खण्डे, १६ पं० = ३९५ पृ० ४ पं०।

अस्य रोदसी ॥ सन्तपन्ति मा मभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति स्वाङ्गाभिधानं वा स्याच्छिश्नानि* व्यदन्तीति सन्तपन्ति माध्यः कामाः स्तोतारं ते शतक्रतो (वित्तं मे अस्य रोदसी†) जानीतं मेऽस्य द्यावापृथिव्याविति त्रितं कूपेऽवहितं मेतत्सूक्तं प्रतिबभौ तत्र ब्रह्मेतिहासमिश्रं मृङ्मिश्रं‡ गाथामिश्रं भवति त्रितस्तीर्णतमो मेधया बभूवापि वा सङ्ख्यानामैवाभिप्रेतं§ स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥

"सं मा तपन्ति"—इति निगमः,—"सं मा तप०—०रोदसी"—इति‖। आप्त्यस्य त्रितस्य, कुत्सस्य वेय मार्षम्। पङ्क्तिः¶। ऐन्द्रेषा। "सं तपन्ति" "माम्" "अभितः" सर्वतोऽवस्थिताः, कूपे पतितस्य एताः, "कूपपर्शवः" कूपेष्टकाः, सङ्कटेऽवस्थितम्। कथं पुनः सं तपन्ति मा मभितः? 'सपत्नीरिव' यथा समान-भर्तृका योषितः

---

* "स्याच्छिश्नानि" क।

† बन्धनीचिह्नान्तर्गत एष पाठो नास्त्येव क-ख-पुस्तकयोः।

‡ "मृग्मिश्रं" क।

§ "अपि वा प्रशंसानामैवाभिप्रेतं" ङ।

¶ ऋ० सं० १, ७, २१, २।

‖ नेयं पङ्क्तिरपि तु यवमध्या महाबृहती। आद्यौ द्वावष्टाक्षरौ पादौ, द्वादशाक्षरस्तृतीयः, ततो द्वावष्टाक्षरौ; सा यवमध्या महाबृहती। अनु० १, ६. द्रष्टव्यम्।

(परस्परं वा पीड्यन्ते*) एकं भर्त्तार मभि सन्तपेयुः दुर्वचोभिः, इद मस्याः त्वया कृतम्, इदं मम न कृत मिति; एवं मा सेताः कूपपर्शवः सन्तपन्ति; ताभिः कूपेष्टकादिभिः अहं पीड्ये। किञ्च; 'मुषो न' "मुषिकाः इव" 'शिश्नाः' "शिश्नानि" "व्यदन्ति" अदन्ति तानि। अन्नवेष्टितानि†, अन्नमिश्राणि, अन्नमिश्रोदकपायितानि, "सूत्राणि" "व्यदन्ति"। सूत्रशब्दोऽध्याहृतः उपपत्तिं दृष्ट्वा भाष्यकारेण‡। विविध मदन्ति भक्षयन्ति। अथ "वा" "स्वाङ्गाभिधानम्" एतत् "स्यात्"। स्वाङ्गाभिधान मिति§ शेपोऽभिप्रेतः; भवति हि तिरश्चा मेषः स्वभावः,—यच्छेपं भक्षयन्ति। अथ वा लाङ्गूल मपि सादृश्यात् शिश्न मुच्यते; भवति हि मूषिकाणा मेष स्वभावः,— स्नेहभाण्डे स्व-लाङ्गूलं मुक्ता उद्धृत्य व्यदन्ति आ स्वादयति। उपपद्यत उपमार्थे एवाय मपीति शिश्नशब्दो विकल्प्यते। एव मेते मदुक्ताः "सन्तपन्ति मा आध्यः"। आधयः "कामाः"; सोमेन यक्ष्ये, दास्ये, भोक्ष्ये इत्येवमादयः। मां भक्षयन्ति, पीड़यन्ति, असम्पूर्यमाणाः। 'आधिः'-इति मानसं दुःख मुच्यते‖। "स्तोतारं ते शतक्रतो" हे 'शतक्रतो।' तव नाम 'स्तोतारं' सन्तम् एते कामाः, एताश्च कूपपर्शवः, मा उभयपार्श्वीकृतं सवाह्यान्तरं सन्तापयन्ति। न च नाम त्व मस्मानेतस्या आपदः त्रायसे,

---

* नैष पाठः क-ख-पुस्तकयोः।

† मूले यदुक्तम् "अन्नातानि" इति, तस्यैव पदस्य व्याख्यान मेतत्।

‡ निरुक्तकृतामुना यास्केनेत्यर्थः।

§ "स्वाङ्ग मिति" ग।

‖ "पुंस्याधिर्मानसी व्यथा"—इत्यमरः १, ७, २८ = २, २, ९७।

समर्थः सन्? अहो न युक्तम्? भक्त-परित्यागो हि सतां सर्वेभ्यः पापेभ्यः पापिष्ठ इत्यभिप्रायः। यदा एव मर्थ्यमानो न शुश्राव इन्द्रः, तदा द्यावापृथिव्यौ आह;—यदि नाय मिन्द्रः शृणोति मन्दभागधेयत्वादस्माकम्। युवा मपि तावत् हे 'रोदसी!' 'वित्तम्' "जानीतम्", "अस्य" वचसः स्तुत्याख्यस्य* यत् प्रयोजनम्, यदर्थं महं रोरवीमि; युवा मपि चैतस्मात् अतिभयाकारात् कूपात् उद्धरतम्। यदि नाय मिन्द्रोऽभ्युद्धरति युवयोरपि स्तोतैवाह मित्यभिप्रायः॥

आह;— पर्शवः इति एतावति श्रूयमाणे कुत एतत् कूपपर्शव एताः? इति। उच्यते;—"त्रितः कूपेऽवहितः" †—इत्येतस्मिन् सूक्ते‡ विशेषलिङ्गात् तदेव भाष्यकारेण ख्यापितम्§; अतएव सूक्तगताद्विशेषलिङ्गात् उपलभ्य "त्रितं कूपेऽवहित मेतत् सूक्तं प्रति बभौ", यत्रेय मृक्॥। तस्मात् कूपपर्शवः एता इति॥

सूत्राणि व्यदन्तीति सूत्रशब्दो भाष्यकारेणाध्याहृतः¶ त्रिस्र

---

* 'स्तुत्याख्यस्य' म।

† ऋ० सं० १, ७, १२, १।

‡ इत्येतस्या मृचीति वक्तव्ये 'इत्येतस्मिन् सूक्ते'—इति प्रमादुक्तम्। अथ वा शाखान्तरविषयैषोक्तिः।

§ सायणेनेत्यर्थः। तथाहि;—"तथा च उभयोः (उभयत्र) कूपपात आम्नायते;—त्रितः कूपेऽवहितः (ऋ० सं० १, ७, १२, १) इति काटे निबाल्ह ऋषिरह्वदूतये (ऋ० सं० १, ७, १४, ६) इति च"—इति।

॥ त्रितं कूपे ऽवहितम् अभिलक्ष्य 'एतत् सूक्तम्' "चन्द्रमा अप्स्वन्तरा (१, १०५)"—इति प्रतिबभौ यस्मिन् सूक्ते इयं 'सस्मा तपन्ति' इति ऋक् अष्टमी.अर्थः।

¶ निरुक्तकारेण, यास्केनेत्यर्थः।

इत्यस्य शब्दस्य शेषभूतो मूषकसम्बन्धेन; ते ह्यन्नगन्धेन सूत्राणि व्यदन्तीति। स्वाङ्गाभिधानपक्षे तु अध्याहारो नास्त्येवेति ॥

"तत्र ब्रह्मेतिहासमिश्रम्"। तत्र तस्मिन् सूक्ते ब्रह्म*, इतिहासमिश्रम्, इतिहासयुक्त मित्यर्थः। तत् यथा;—"त्रितः कूपेऽवहितो देवान् हवत ऊतये"—इत्येव मादि †। "ऋग्मिश्रं"‡, "गाथामिश्रं" च "भवति"। स पुनरितिहासः ऋग्बद्धो गाथाबद्धश्च। ऋक्-प्रकार एव कश्चित् गाथेत्युच्यते§; गाथाः शंसति, नाराशंसीः‖ शंसतीति ह्युक्तं गाथानां कूर्वीतेति। स एष सूक्तानां स्वभावः प्रदर्शितः,—इतिहाससम्बन्धान्यपि सूक्तानि भवन्ति। तेषु प्रकरणादपि सन्दिग्धस्य पदस्यार्थोऽध्यवसेयः; यथेह पर्शु-शब्दो भाष्यकारेणाध्यवसित इति¶ ॥

भाष्यप्रसक्तं त्रित-शब्दं निर्ब्रवीति;—"त्रितः तीर्णतमो मेधया"

---

* इह वाक्यं ब्रह्मेत्युच्यते। तथा हि,—"वाग्घि ब्रह्म, तत्र स काम उपाप्तो यो वाचि च ब्रह्मणि च"—इति ऐ॰ ब्रा॰ २, २, ५।

† ऋ॰ सं॰ १, १०५, १७।

‡ "ऋङ्मिश्रम्"—इत्येव मेव कातिरिक्तसर्वमूलपुस्तकपाठः परं वृत्तिपुस्तकेषु त्विव्येव ऋग्मिश्र मिति।

§ साम्नैव स्तोत्र मिति स्तोत्रसाधनं गीत्यात्मकं सामैव गाथेत्युच्यते। तथाहि, ऋक्-संहिताभाष्ये आसा मृचां व्याख्यानं द्रष्टव्यम्, तथाहि;—१, ७, १. १, ४२, ४. ८, २२, १. ८, ७१, १४. ८, ९२, २. ८, ९८, ९. ९, ९९, ४. १०, ८५, ६। ऐतरेय-ब्राह्मणे च,—"इन्द्रगाथाः शंसति। इन्द्रगाथाभिर्वै देवा असुरानभिगाय (६, ४, १९)"—इत्येवमादि द्रष्टव्यम्।

‖ "नाराशंसीः शंसति। प्रजा वै नरो वाक् शंसः, प्रजास्वेव तद् वाचं दधाति" —इति ऐ॰ ब्रा॰ ६, ४, १६। 'प्रातारत्नम् (ऋ॰ सं॰ २, १ १०, १) इत्यादि मनुष्याणां स्तुतयो नाराशंस्यः'—इति च सा॰ भा॰ (ऋ॰ सं॰ ८, २, २१, १)।

¶ निरुक्तकारेण, यास्केनेत्यर्थः।

एकतद्वितयोः सकाशात् "बभूव"* । "अपि वा" सङ्ख्यानिमित्त मेव एतत् "नाम" "अभिप्रेतं स्यात्" । कथम्? "एकतः, द्वितः, त्रितः इति त्रयः" हि ते भ्रातरः "बभूवः"; तस्मात् सङ्ख्यानिमित्त मप्युपपद्यत एव । उक्तञ्च ;—"भार्याङ्गारेणाभ्युपादयत् तत एकतोऽजायत, द्वितीयं ततो द्वितः, तृतीयं ततस्त्रित इति† ॥ ६ ॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः। सोमराजन् प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥ ईषणेन वैषणेन वार्षणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्द्धय च न आयूंषि सोमराजन् । अहानीव सूर्यो वासराणि । वासराणि वेसराणि विवासनानि गमनानीति वा कुरुतनेत्यनर्थका उपजना भवन्ति कर्त्तनहन्तनयातनेति जठर मुदरं भवति जग्ध मस्मिन् ध्रियते धीयते वा ॥ ७ ॥

---

* "अत्र शाट्यायनिन इतिहास माचक्षते। एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः । ते कदाचिन्मरुभूमावरण्ये वर्त्तमानाः पिपासया सन्तप्तगात्राः सन्त एकं कूप मविन्दन् । तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत् । स्वयं पीत्वेतरयोरपि कूपादुदक मुद्धृत्य प्रादात् । तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्व मपहृत्य कूपञ्च रथचक्रेण पिधाय प्रास्थिषाताम् । ततः कूपे पतितः स त्रितः कूपादुत्तरीतु मशक्नुवन् सर्व देवा मा मुद्धरन्त्विति मनसा सस्मार । ततस्तेषां स्तावक मिदं सूक्तं (ऋ० सं० १, १०५) ददर्श ।"—इति सा० भा० ।

† तैत्तिरीयपाठस्त्वेवम् ;—"तत एकतोऽजायत इति स द्वितीय मभ्यपातयत् ततो द्वितोऽजायत स तृतीय मभ्यपातयत् ततस्त्रितोऽजायत"—इति ।

"इषिर:(७)"—इति *। एतदनवगतम्। "ईषणेन वा एषणेन वा अर्षणेन वा" इति। एताः शब्दसमाधयः। "इषिरेण ते मनसा" इति समानविभक्त्यन्तत्वात् इषिर-शब्दस्य प्रतीयत एव मतो विशेषणत्व मित्यभिधेय मनुक्त्वा निगम मेव पठति;—"इषिरेण ते मनसा॰—॰वासराणि"—इति †। प्रगाथस्येय मार्षम्। त्रिष्टुप्। सौमी। हे भगवन्! 'सोम!' 'इषिरेण मनसा' त्वां प्रति सर्वात्मना गतेनेत्यर्थः। "ईषति, फणति"—इति गतिकर्मसु पठितम् ‡। "एषणेनेति वा" स्यात्, इच्छावता फलप्रार्थनावतेत्यर्थः। "अर्षणेनेति वा", दर्शनवता। ईदृशेन मनसा किं कुर्मः? 'ते' तव योऽस्माकं खांशः, तं भक्षीमहि तं भक्षयेमहि। कथं पुनः भक्षयेमहि? 'पित्र्यस्येव रायः' यथा पित्र्यो धनांशः अविघ्नेन भक्ष्यते, भक्षितस्य सुखपरिणामो भवति, एवं तव वयं ख मंश मविघ्नेन भक्षयेमहि, भक्षितस्य सुखपरिणामो मे अस्तु; मातीव भियेमहीत्यभिप्रायः। किञ्च; हे 'सोम-राजन्!' 'प्र' 'नः' 'आयूंषि' 'तारीः' तारय § च प्रवर्द्धय च नः आयूंषि। कथं पुनः प्रवर्द्धय? "अहानि इव सूर्यः वासराणि"। यथा सूर्यः वासराणि वासन्तिकान्यहनि। "वासराणि" इति "वेसराणि"। शीतोष्णाभ्यां हि द्वाभ्यां तानि सरन्ति; तेषु हि शीतोष्णं भवति; रात्रौ शीतम्, दिवा उष्णम्। अथवा "विवासनानि" स्युः; तानि हि तत् शीतं विवासयन्ति नाशयन्तीत्यर्थः। "गमनानीति वा"

* १भा० २९ पृ० १३ पं०।

† ऋ० सं० ६, ४, १९, २।

‡ १भा० २अ० १४ख० (७०), (७१)।

§ "प्रतारय"—इति ग।

विस्तृतानि विस्तीर्णानि सन्ति वासराणीति उच्यन्ते *। यथा तानि सूर्यः वर्द्धयति मन्दगतित्वात्, एव मस्माकं त्व मायुः प्रवर्द्धयेत्याशीः॥

"कुरुतन(८)"—इति†। "अनर्थका उपजना भवन्ति", य एवार्थं कुरुतेत्युक्ते भवति, स एव कुरुतनेति ; नात्र नकारस्यार्थोऽधिकोऽस्ति। अधुना एव मुक्त्वा अन्यान्यपि दर्शयति ;—"कर्त्तन-हन्तन-यातनेति"।

"शुनं सुफाला वि तुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः। शुनासीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्त्तनास्मे"—इति‡।

अग्निचयने क्षेत्रकर्षणे विनियुक्ता। त्रिष्टुप्। 'शुनं' 'सुफालाः' सुखं शोभनाः फालाः, 'वि तुदन्तु' विलिखन्तु 'भूमिम्'। सुखं 'कीनाशाः' भूमिं कीणनाशाः,खिलोत्कर्त्तारः, कर्षुकाः, 'अभि यन्तु'; 'वाहैः' अनडुद्भिः। अयं तावदेवं कृषिवलः कृषिं करोतु, युवा मपि हे 'शुनासीरौ!' 'हविषा' उदकेन 'तोशमानौ' निघ्नन्तौ भूमिं 'सुपिप्पलाः' सुफलाः, एता 'ओषधीः' 'कर्त्तन' कुरुत ; 'अस्मे' अस्मभ्य मित्यर्थः॥

"यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति॥ द्रुहः पाशान् प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम्"—इति§॥

वसिष्ठस्येय मार्षम्। सान्तपनस्य चरोः याज्यैषा। 'यः' 'नः' अस्माकं हे 'मरुतः!' 'दुर्हृणायुः' पापक्रोधः, 'तिरश्चित्तानि' अन्तर्हितानि चित्तानि कृत्वा सम्मोह्य ततो हन्तु मस्मानिच्छति। हे 'वसवः'

---

* १भा० ५५ पृ० (४) द्रष्टव्यम्।

† १भा० ३९० पृ० १८ पं०।

‡ य० मा० सं० १२, ६९।

§ ऋ० सं० ५, ४, १०, २।

सर्वभूतवासयितारः! तस्येदंलक्षणस्य 'द्रुहः' अस्मद्द्रोग्धुः उपरि 'पाशान्' 'प्रति सं मुचीष्ट' प्रतिसम्मोचयत। पाशैः एनं बद्धा 'तपिष्ठेन' तापयितृतमेन 'हन्मना' हननेन, बधेन 'हन्तन' हन्तेत्यर्थः॥

"कोऽन्वत्र मरुतो ०—० वेदा म ऋतानाम्"—इति *॥

इन्द्रागस्त्यमरुतां संवादः। कयाशुभीयं सूक्तम्। तत्रेय मगस्त्यस्यार्षम्। महाव्रते व्यूढ़स्य च दशरात्रस्य सप्तमेऽहनि सूक्तं शस्यते। हे 'मरुतः!' कोऽन्यः युष्मानेव मेतस्मिन् जगति 'मामहे' पुनः पुनः महयति, पूजयति? यथा अहं, तथा न कश्चिदित्यभिप्रायः। यत एव मतो ब्रवीमि;— अस्मान् एव 'सखीन्' आभिमुख्येन 'प्र यातन' प्रयात, हे 'सखायः!'। किञ्च; 'मन्मानि' मननानि स्वानि चेतांसि 'चित्राः' चित्राणि, अस्मान् प्रति 'अपि वातयन्तः' निगमयन्तः 'एषाम्' 'ऋतानां' यज्ञानां प्रापयितारो 'भूत' भवत, हे 'नवेदाः' मेधाविनः! इत्यर्थः॥

"जठरम्(९)"—इति†। एतदनवगतम्। "उदरं भवति"—इति अभिधेयवचनम्। "जग्धम्" भुक्त मन्नम् "अस्मिन्" अवस्थितं "ध्रियते" इति जठरम्‡। अन्नं "वा" जग्ध मस्मिन् "धीयते" इति जग्धधानं वा स्यात्। एते शब्दसमाधी॥७॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोम मनुष्वधं म-

---

* "को न्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा सखायः। मन्मानि चित्रा अपि वातयन्त एषां भूत नवेदा म ऋतानाम्॥"—इति ऋ० सं० १, १, २९, ३।

† १भा० २९१ पृ० १२ पं०।

‡ "जग्धधरम्" क।

दाय। आसिञ्च स्वजठरे मध्व ऊर्म्मिं त्वं राजासि प्रदिवः सुतानाम्॥ मरुत्वानिन्द्र मरुद्भि*स्तद्वान् वृषभो वर्षितापां रणाय रमणीयाय सङ्ग्रामाय पिब सोम मनुष्वध मन्वन्नं मदाय मदनीयाय जैत्रायासिञ्च स्वजठरे मधुन ऊर्मिं मधु सोम मित्यौपमिकं माद्यतेरिद मपीतरन्मध्वेतस्मादेव त्वं राजासि पूर्वेष्वप्यहःसु सुतानाम् ॥ ८ ॥

॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥ ४,१ ॥

"मरुत्वाँ इन्द्र"—इति निगमः। "मरुत्वाइन्द्र वृषभः ०—० सुतानाम्"—इति†। विश्वामित्रस्येय मार्षम्। त्रिष्टुप्। महाव्रते पृष्ठ्यस्य चतुर्थेऽहनि शस्यते। मरुत्संयुक्तो भूत्वा पिब। हे 'इन्द्र!' यः त्वं 'वृषभः' वर्षिता, 'अपाम्' इत्यध्याहृतं भाष्यकारेण वृषभसम्बन्धात्। यः त्वा मेवं कर्मकारी, तं त्वां ब्रवीमि,—'रणाय' "रमणीयाय सङ्ग्रामाय" रमणीयं सङ्ग्रामं करिष्यामीति एत मर्थ मुद्दिश्य "पिब" एतं "सोमम्" अस्मत्प्रदत्तम्। 'अनुष्वधं' स्वधेति अन्ननाम‡, सवनीयपुरोडाशाद्यभिप्रायेण। 'अनुष्वधम्' "अन्वन्नम्"। 'मदाय' "मदनीयाय" पानाय, युष्मदर्थं मस्माभिः संस्कृतम्। 'जैत्राय'—इत्यध्याहृतं भाष्यकारेण; द्विविधो हि मदः,—सम्मोहकरो जैत्रश्च, तयोः जैत्र इष्टः सङ्ग्रामे। कथं च पुनः पिब?—किं मोषत्? नेत्युच्यते,—

* क-ख-ग-पुस्तकेष्वेतत् पदं न दृश्यते।

† ऋ० सं० ३, ३, ११, १।

‡ १भा० १०९ पृ० (१७)।

'आसिञ्च स्वजठरे' ये 'मध्वः' "मधुनः"। "मधु सोम मिति, औपमिकम्"—इत्येतदुक्तं सोमस्य मधुत्वम्। "माद्यतेः" धातोः। तृप्तिर्हि समाना, सोमेन मध्वा चेत्यौपमिकत्वम्। "इद मपीतरत् मधु" माक्षिकम् "एतस्मादेव" माद्यतेः। यत्तु सोमस्योपचारत्वेन, तस्मात् माध्वीकम्। 'ऊर्मिः' सङ्घातः। तावत् तं सोम मासिञ्च स्वजठरे, यावता जैत्रो मद उपजायते। कस्मात् पुनरेवं ब्रवीमि? इतः,—यस्मात् 'त्वं राजासि प्रदिवः सुतानाम्' त्व मेव 'राजा' ईश्वरः "पूर्वेष्वपि * अहःसु सुतानाम्" अभिषुतानाम्, न केवल माधुनिकानाम्; एवं ते समुचितं सोमपान मित्यभिप्रायः॥ ८॥

॥ इति निरुक्तवृत्तौ नवमाध्यायस्य (चतुर्थाध्यायस्य)
प्रथमः पादः॥ ४, १.

---

## तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्न मिति वा॥ १(९)॥

"तितउ(१०)"—इति†। एतदनवगतम्। "परिपवनं भवति"-इति अभिधेयवचनम्। सक्तवः परिपूयन्ते येन द्रव्येण, तत् परिपवन मुच्यते‡। ततेन चर्मणा नद्धं 'तितउ'। तुन्नैर्वा छिद्रैः तद्वत् 'तितउ'। तिल-

* "सर्वेष्वपि" ग।
† १भा० ३९१ पृ० १७ पं०।
‡ 'चालनी तितउः पुमान्''—इत्यमरः। २, ९, २६।

मात्राणि वा तुन्नानि तस्मिन्निति 'तितउ'। यथासम्भव मेताः शब्द-समाधयः ॥ १(९) ॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ सक्तुमिव परिपवनेन पुनन्तः सक्तुः सचतेर्दुर्द्धावो भवति कसतेर्वा स्याद्विपरीतस्य विकसितो भवति यत्र धीरा मनसा वाचमकृषत प्रज्ञानं धीराः प्रज्ञानवन्तो ध्यानवन्तस्तत्र सखायः सख्यानि सञ्जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि* भद्रम्भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं† भवद्रमयतीति वा भाजनवद्वा लक्ष्मीर्लाभाद्वा लक्षणाद्वा (लप्स्यनाद्वा ‡) लाञ्छनाद्वा § लषतेर्वा स्यात् प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः शिप्रे इत्युपरिष्टाद् व्याख्यास्यामः ॥ २(१०) ॥

निगमः ;—"सक्तुमिव तितउना"—इति¶। विद्यास्तुतौ बृहस्पते-रार्षम्। "सक्तुः सचतेः" स हि सूक्ष्मत्वात् सचति संश्लिष्यति अङ्गे।

---

* "वाचीति" ङ, च।

† "समिद्रमणीयं"।

‡ एष पाठो ङ-च-पुस्तकयोरधिकः।

§ "लाञ्छनाद्वा" ङ, च।

¶ ऋ० सं० ८, २, २३, २।

ततो "दुर्धावो भवति"—इति उपपत्तिः। दुःखं धाव्यते प्रक्षे इत्यर्थः। "कसतेः वा स्यात् विपरीतस्य" स हि "विकसितः" विपुष्पितः "भवति"। यथा सक्तुं कश्चित् परिपवनेन पुनाति, एवं "मनसा" परिपवनस्थानीयेन परिपूय विनिश्चित्य शब्दार्थं न्याययुक्तां "वाचं" "यत्र" यस्मिन् समाजे, यज्ञे वा "धीराः" धीमन्तः, मेधाविनः 'अक्रत' "अकृषत" कुर्वन्तीत्यर्थः*। अत्र केचित् अकृषत प्रज्ञान मित्यभिधीयते; प्रज्ञानार्थत्वात् वाचः। तत्र किम्? इति। "तत्र सखायः" समानख्यानाः। समानख्यानाना मेव समानेषु शास्त्रेषु कृतश्रमाणाम्; तद्यथा,—वैयाकरणानां वैयाकरणा एव, नैरुक्तानां नैरुक्ता एव। "सख्यानि" सखिभावान् "सञ्जानते" विज्ञानानि सञ्जानते, इतरेतरस्य यो विज्ञान-प्रकर्षः, तं जानते। किङ्कारणम्? यस्मात् "भद्रा" भन्दनीया † "एषां" "लक्ष्मीः" विज्ञानाख्या "निहिताधि वाचि" वाचः 'अधि' उपरि, 'निहिता' अवस्थापिता। तया लक्ष्म्या इतरेतरस्य विज्ञानश्रमं जानते; इतरो ह्यविद्वान् किं विज्ञास्यत इत्यभिप्रायः॥

"भद्रम्"। "भगेन व्याख्यातम्" स्त्रीभगः तथा स्यात्, भजतेः ‡ इति। "भजनीयम्" इति। "भूतानाम्" "अभिद्रवणीयम्" अभिगमनीय मित्यर्थः। "भवद्रमयतीति वा" यस्य हि तद् भवति, स रमते। "भाजनवद्वा" सन्ति हि कल्याणरूपाः पुरुषाः, ये तस्य भाजनम्, तैः तद्वत्॥

---

* "मनसा दूषिता वाग् वदति; यां ह्यन्यमना वाचं वदत्यसूर्या वै सा वागदेवजुष्टा"—इति ऐ० ब्रा० २, ४, ४।

† "भद्रे भन्दनीये"—इति परस्तात् (दै०का० ११, २, ७) द्रष्टव्यम्। १भा० १५७ पृ० ज्वलतिकर्मसु, २२४ पृ० अर्चतिकर्मसु च "भन्दते"—इति द्रष्टव्यम्।

‡ पु० ९१ पृ० १९ पं०।

"लक्ष्मीः"। "लाभाद्वा" लक्ष्मीवन्त एव लभन्ते, नेतरे। "आ लक्षणाद्वा" आलक्षित एव हि लक्ष्मीवान्। "लाञ्छनाद्वा" तया हि लाञ्छित इव भवति *। "लषतेः (भ्वा०उ०) वा स्यात्, प्रेप्साकर्मणः"; सर्व एव हि ता मभिलषन्ति। "लग्यतेः (भ्वा०प०) † वा स्यात्, आश्लेषकर्मणः"; आश्लिष्य इव हि सा वर्त्तते पुरुषम्। "लज्जतेः (तु०आ०) वा स्यात्, अश्लाघाकर्मणः"; ये हि लक्ष्मीवन्तो भवन्ति, ते स्वय मात्मानं न श्लाघन्ते ॥

"शिप्रे(११)"—इति ‡। "एतत् उपरिष्टात् व्याख्यास्यामः";—"शिप्रे हनू नासिके वा"—इति §; अत्र ‖ हि एतन्निगमप्रसक्त मायास्यतीति लाघवार्थं मुत्क्रष्टम् ¶ ॥ २ (१०)॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं सञ्जभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुक्त ** हरणानादित्यरश्मीन् हरितोऽश्वानिति वाथरात्री वासस्त-

---

* "लाञ्छनाद्वा तया हि लाञ्छित इव भवति"—इति ग।

† दिवादिश्छान्दसः।

‡ १भा० २९२ पृ० ४ पं०।

§ प० ६ अ०४ पा० १ ख०।

‖ षष्ठेऽध्याये इति यावत् (६, ४, १.)।

¶ तत्र हि "सुशिप्रः"—इत्येतन्निर्वचनावसरे "वाजं सुशिप्र गोमति (ऋ० सं० ६, २, १, २)"—इत्येष निगमः प्रदर्शनीयो भविष्यत्येव; तत्प्रासङ्गिकत्वेन शिप्रव्याख्यालघुत्व मुपगतं निरुक्तकारेणेति भावः।

** "वयुक्त" च।

नुते सिमस्मै वेसर मह्नरवयुवती सर्वस्मादपि
स्याद्राचीव वासस्तनुत इति तथापि निगमो भवति
पुनः समव्यद्वितनं वयन्ती । समनात्सीत् ॥ ३ (११) ॥

"मध्या(१२)"—इति *। एतदनवगतम्। "मध्ये"—इत्यवगमः।
"तत् सूर्यस्य देवत्वं०—०सिमस्मै"—इति निगमः †। आङ्गिरसस्य
कुत्सस्यैय मार्षम्। त्रिष्टुप्। सौर्यस्य पशोः षड्विं वपाया याज्या;
सूचितञ्च,—"चित्रन्देवाना मिति पुरोनुवाक्यास्तिस्र उत्तरा याज्याः
सौर्यस्योपांशु (आ० ३,८.)"—इति। 'तत्' अहं 'सूर्यस्य' भगवतः
'देवत्वं' देवताभावं, 'तन्महित्वं' तच्च महत्त्वं माहाभाग्यं 'मन्ये' जाने।
तत् किम्? इति,—'मध्या' "मध्ये" "यत्" "कर्मणां क्रियमाणानाम्"
अनेकेषाम् अवगणय्य सर्वान् कर्मकर्तॄन् 'विततं' तेषां "विततम्"
एतत् प्रकाशजालम् ‡। एव मतिमहत्। महतापि कालेन तत् दुरु-
पसंहार मन्यैर्यदेकेन मुहूर्तेनायत्नेनैव भगवता सूर्येण "संह्रियते",
तत् अस्य देवत्वं तच्च महत्त्व महं मन्ये। किञ्च; "यदासौ"
भगवान् सूर्यः, "अयुक्त" युनक्ति, 'हरितः' "हरणान्" रसहरणान्
"आदित्यरश्मीन्" आत्मन्यस्तं गच्छन् 'सधस्थात्' पृथिवीलोका-
दाकृष्य। पृथिवी हि तेषां रसादानार्थं सहस्थानम्। इतो हि ते
सर्वं एव रसानाददते। 'आत्' अथेत्यर्थः। अथ तदैव उपसंहृत-
सर्वरश्मिजाले भगवति सूर्ये, 'रात्रिः' § 'वासः' "वेसर मह्नरव-

---

* १भा० ३९२ पृ० ८ पं०।

† ऋ० सं० १, ८, ७, ४।

‡ "प्रकाशजातम्" ग।

§ मूले सुपांसुलुगिति साप्तमिके पूर्वसवर्णदीर्घे रूपं "रात्री"—इति।

युवती" अवमिश्रयन्ती 'सिमस्मै' सिमस्मात्, सर्वस्मात् लोकात् अहरपकृष्य *, स तमः 'तनुते'। तदेव मेतदपि सूर्यस्यैव माहाभाग्यं यदस्य सन्निधौ तमो नश्यति, यस्मानेनोत्सृष्टो देशः स तमसा छाद्यत इत्यभिप्रायः। "हरितोऽश्वानिति वा †" ऐतिहासिकपक्षमतेन॥

"अपि वोपमार्थे स्यात्, रात्रीव वासस्तनुत इति" वास इव रात्री तमः तनुत इत्यर्थः। पूर्वत्र वेसर मध्हरवयुवती तमस्तनुत इति नास्त्युपमा, इह पुनर्वास इव तमस्तनुत इत्येव सुपमा॥

यथा च उपमार्थोऽपि युज्यते, "तथा" च "निगमः" "अपि" अयं "भवति";—"पुनः समव्यद्विततं वयन्ती०—०सविता देव आगात्" ‡। एतत्समदस्यैव मार्षम्। सावित्री। त्रिष्टुप्। पृष्ठ्यस्य षष्ठेऽहनि वैश्वदेवशस्त्रे शस्यते तृतीयसवने। "पुनः समव्यद्विततं वयन्ती"। "समनात् सीत्"—इति निर्वचनम्। समवेष्टयदित्यर्थः। यथा योषित् काचिद् वासो वयन्ती, पुनः संवेष्टयत्यस्तमयकाले, पुनश्च वितनोत्यादित्य उदिते; एव मियं रात्रिः पुनरेव तमः संवेष्टयति, योषिदिव वासो वयन्ती। कदा पुनः संवेष्टयति? यदा 'मध्या' मध्ये 'कर्त्तोः' कर्मणां क्रियमाणानां लौकिकवैदिकानां 'विततम्' एतद्रश्मिजालम् §, 'शक्म' स्वात्मप्रसवादपत्यभूतं 'न्यधात्'

---

* "लोकात् आकृष्य" ग।

† "हरितोऽश्वा इति" ग।

‡ 'पुनः समव्यद् विततं वयन्ती मध्या कर्त्तोर्न्यधाच्छक्म धीरः। उत्संहायास्थाद् व्यृतूंरदर्धररमतिः सविता देव आगात्॥" ऋ० सं० २, ८, २, ४।

§ "विततं रश्मिजातं" ग।

न्यद्धात्, नीचैर्धत्ते लोकानां प्रकाशनाय। अथवा शक्मेति कर्मनाम * स्यात्; यदा स्वं प्रकाशं पुनः कर्म निधत्ते, निदधाति, उदेति 'धीरः' धीमानादित्यः, तदा अहनि अभ्युपस्थिते पुनः संवेष्टयति रात्रिस्तम इति। अस्तमयं प्रति पुनर्वास इव तनोतीति। एव मेतस्मिन्नपि मन्त्रे सामर्थ्यादसत्युपमाशब्दे वाससा तम उपमीयते। यथेह तथा पूर्वस्मिन्नपि † निगमेऽपीत्येव मेके मन्यन्ते। अपरे पुनः अपिवोपमार्थं स्यादित्यत्रैवं वर्णयन्ति;—रात्रीव वासस्तनुत इत्यत्र वासःशब्दोऽहःशब्दपर्यायवाची ‡, तस्योक्ता व्युत्पत्तिः वेसर महरिति §। सा रात्रिः वासस्तनुते, अहस्तनुत इत्यर्थः। रात्रिप्रान्ते हि शुक्ल महर्लक्ष्यते ‖, तेन ज्ञायते रात्र्यैवेदं तत मिति। एव मुपमार्थत्व मेके मन्यन्ते ;—यदा वाय मर्थः, तदा "पुनः समव्यद्विततं वयन्ती (ऋ० सं० २, ८, २, ४)"—इत्यत्र पुनः समवेष्टयदहो रात्रिः, वितत मिव वासो वयन्ती। कदा? यदा मध्ये कर्मणां 'न्यधात्' निदधाति। अस्तं गच्छन् आदित्यः स्वमण्डले 'शक्म' रश्मिजालं यदा च 'उदस्थात्' उत्तिष्ठति, स्वरश्मीनुपसंहृत्य 'व्यधात्' विदधाति 'ऋतून्' अहोरात्रलक्षणान् ¶। यदा एवम् 'एषः' 'सविता देवः', 'अलमतिः' पर्याप्तमतिः, 'आगात्' आगच्छति। तदा 'रात्रिः तनुते' 'वासः'

---

* १भा० १९९ पृ० (९) द्रष्टव्यम्।
† "तत् सूर्यस्य देवत्वं"—इत्यत्र (४०६, ४०७ पृ०)।
‡ १भा० ५५ पृ० (४) द्रष्टव्यम्।
§ पु० ४०७ पृ० १ पं०, १९ पं०।
‖ "शुक्रं ते अन्यद् (४, ८, २४, १,"—इत्यर्थः पर्यालोच्यः।
¶ "अहर्लक्षणान्" ग।

अहर्लक्षणम्, 'पुनः' 'संवेष्टयतीत्येवं मन्यन्ते। यदत्रार्थाविरोधि तत् प्रतिपत्तव्यम्॥ ३ (११)॥

इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा। मन्दू समानवर्चसा॥ इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्॥ ४ (१२)॥

"मन्दू (१२)"—इति*। एतदनवगतम्। "मदिष्णू, मन्दुनेति वा" शब्दसमाधौ। "इन्द्रेण सं हि"—इति निगमः†। मधुच्छन्दस इद मार्षम्। महाव्रते महदुक्थे तृचाशीतिषु शस्यते; साचिकेषु चाहःसु स्तोमातिवृद्धौ प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्रे इन्द्र उच्यते। हे भगवन्! इन्द्र! त्वं 'इन्द्रेण' ईश्वरेण, दीप्तेन वा मरुद्गणेन, नित्य मेव "सङ्गच्छमानः" 'सं दृश्यसे' "सन्दृश्यसे"। 'अबिभ्युषा' अभयवता; "गणेन"—इत्यध्याहारः। तौ च "युवां" मरुद्गणः त्वं च, एकत्र सङ्गतौ। "मदिष्णू" हर्षशीलौ; नित्यप्रमुदितावित्यर्थः। 'समानवर्चसौ' च; समानदीप्ती इत्यर्थः। एवं "मन्दू समानवर्चसा"—
—इत्येतेन द्विवचनेन मरुद्गणेन्द्रविषयेण निगमो व्याख्यातः। "अपि वा" एव मन्यथा "स्यात्"। मन्दू इत्यस्य तृतीयैकवचनान्तत्वेन विपरिणामः; एतच्च सति मरुद्गणविशेषण मेतद्भवति। कथम्? "मन्दुना" मरुद्गणेन, इन्द्र! सन्दृश्यसे सङ्गच्छमानः। "समानवर्चसा

* १भा० २९१ पृ० ११ पं०।
† ऋ० सं० १, १, ११, १।

"ओषधयो भवन्ति"—इति, "शीर्णा आप इति वा", वर्षासु हि प्रवृद्धानि स्रोतांसि शरदि विशीर्यन्ते। "अस्य—इति" एतत् पदं पुंविषयम् षष्ठ्यन्तम् "अस्याः—इत्येतेन" स्त्रीविषयेण पदेनैव "व्याख्यातम्" ॥ ४ (२५) ॥

**अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यश्नो * भ्राता भरतेर्हरतिकर्मणो हरते भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्याय † मग्निस्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्र मिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति ॥ ५ (२६) ॥**

यदेवोक्तम् "उदात्तं प्रथमादेशे, अनुदात्तम् अन्वादेशे" ‡—इति तदेवात्रापि लक्षण मित्यभिप्रायः। उदाहरणमात्रं प्रदर्श्यते;—"अस्य वामस्य०—०सप्तपुत्रम्" §। अस्यवामीय मेवेदं सूक्तम्। दीर्घतमस आर्षम्। तार्त्तीयसवने महाव्रते वैश्वदेवे शस्त्रे शस्यते। 'अस्य' सूर्यस्य 'वामस्य' "वननीयस्य" स्तुतिभिः, 'पलितस्य' "पालयितुः"

---

* "मध्यमो ऽस्त्यश्नो" ङ, च।

† "घृतपृष्ठोऽस्याय" ङ, च।

‡ पु० ४०५ पृ० १२ पं०।

§ ऋ० सं० २, २, १४, १।

अयं हि सर्वमेवेदं जगत् पालयति। 'होतुः' "ज्ञातव्यस्य" आह्वानार्हस्य। आह ;—तस्य किम् ? इति। उच्यते ;—योऽय मेवंलक्षणः 'तस्य' 'भ्राता' "भागहर्त्ता", "भर्त्तव्यो वा" उदकेन, 'मध्यमः' मध्यमस्थानः 'अस्ति' विद्यते *। कतमः ? योऽयम् 'अश्नः' "अशनः" व्यापनो वायुरित्यर्थः ; स हि द्युलोकादादित्येनोदकेन भ्रियते, हरति चोदकं द्युलोकात्। 'तृतीयः' 'अस्य' वायोः 'भ्राता' हविर्भागहर्त्ता वा ; ऐन्द्राग्ने हविषि संस्तुतौ वा 'घृतपृष्ठः' घृतेन स्पृष्टः, आज्यस्पृष्टः "अयम्" एव "अग्निः" पृथिवीस्थानः †। 'सहस्विणः' ‡ वायोः ; सर्वस्माद्धि वायुः बलवान्। अथ वा सहस्र मस्य नियुक्त मश्वाना मस्तीति सहस्री वायुः ; "आ नो॑ नि॒युद्भिः॑ श॒तिनी॑भि-रध्व॒रं स॑ह॒स्रिणी॑भिः"—इति§ श्रूयते वायव्ये मन्त्रे। वायुः, आदित्यः, अग्निः,—इत्येवं परिसङ्ख्याय वायोस्तृतीयोऽग्निर्भवति ; वायुरपि च ज्योतिरेव ; "वायुना ज्योतिषा"—इति विज्ञायते ‖। तत्रैतस्मिन् त्रेधा विभक्ते ज्योतिषि¶, प्रधानत्वेनैत मेवाह मपश्य मिति। 'विश्पतिं' विश्वस्य सर्वस्य जगतः पालयितारम्। कतमम् ? य एष 'सप्तपुत्रः'

---

* "वायुर्देवेभ्यो हव्यं वहति, वायु मेव तदन्तरिक्षलोक आयातयति"—इति ऐ० ब्रा० २, ५, २। परस्ताचाय मपि वक्ष्यति दै० ६, २, ९।

† "इमं हि मनुष्या इन्धतेऽग्नि मेव तदस्मिंल्लोक आयातयति"—इति ऐ० ब्रा० २, ५, १।

‡ एतत् पदं, न जाने वृत्तिकृता कुत उपलभ्य व्याख्यात मिति।

§ ऋ० सं० ९, १, २४, २।

‖ "स वायुना ज्योतिषा भाति च तपति च"—इति श० ब्रा० ५, १८।

¶ "भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यः"—इति ऐ० ब्रा० २, ५, ४।

सूर्य एत मेवाह मन्त्र प्रधानेनापश्य* मित्येव मेतस्मिन् मन्त्रे सूर्यः प्रधानः, सूक्ते सूर्याधिकारात्; तस्मात् 'अस्य वामस्य'—इत्येषः "अस्य"-शब्द अन्तोदात्तः। वायुरत्राप्रधानम्; तस्मात् 'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्येषः "अस्य"-शब्दोऽनुदात्तः॥ एव मेकस्मिन्नेवास्मिन् मन्त्रे उदात्तानुदात्तावेतौ "अस्य"-शब्दौ प्रधानाप्रधानविषयावित्येक मेवोदाहरणम्॥

आह;—'तृतीयो भ्राता घृतपृष्ठो अस्य'—इत्यनेन "अस्य"-शब्देन सूर्य एव कस्मान्न सम्बध्यते? अपि च "तृतीय"-शब्दस्य प्रकृतानुक्रमाविरोधेनैव मेव सुखतरा योजना भविष्यति। उच्यते;—'अस्य वामस्य'—इत्येतदन्तोदात्तं पद मितरदन्यत् तृतीयो भ्राता घृतपृष्ठो अस्य'—इति प्रधानरूप मेव सत् पूर्वेणानुदात्त मिति स्वरकृताद्विशेषादर्थकृतेनापि विशेषेण भवितव्य मित्यप्रधानार्थाभिधायिना विशेषः प्रतीयते। आदित्यसंस्तवात् सूक्ते वायुस्त्वात्राप्रधानः, प्रकृतादादित्यात् तस्माद्वायुविषय मेवेदम् अस्येति द्वितीयपद मनुदात्तं सम्पद्यते। अतः सुतरा सुपपन्नं भवति "उदात्तं प्रथमादेशेऽनुदात्त मन्वादेशे" —इत्यत्र प्रथमादेशान्वादेशशब्दाभ्यां प्रधानाप्रधानावुच्येते इति। अन्ये तु मन्यन्ते,—प्रथमादेशो नाम प्रारम्भः; तत्र यद्वर्त्तते, तदुदात्तं भवति, प्रधानार्थतर मुदात्तत्वेनैवा† लक्षणेन। तद्यथा,—"अस्या ऊ षु णः (ऋ० सं० २, २, २४.)", "अस्य वामस्य (ऋ० सं० २, ३, १४, १.)" —इति। अन्वादेशो नाम, अन्यस्य पदस्य पश्चादादेशः; तत्र वर्त्तमान मनुदात्तं भवति। पदात् पदस्य निघातो भवतीति हि

* "प्रधानत्वेनापश्य" ग।

† "मनुदात्तत्वेनैव" क।

लक्षणविदोऽपि ब्रुवते *। तच्चानुदात्तत्वेनैव लक्षणेनाल्पीयोऽर्थतर मप्रधानार्थतरं भवति। तद्यथा,—"दीर्घायुरस्या यः पतिः (ऋ० सं० ८, ३, २७, ४.)", "तृतीयो भ्राता घृतपृष्ठो अस्य (ऋ० सं० २, ३, १४, १.)"—इति॥

आह;—कथं सप्तमपुत्र आदित्यः? इति। उच्यते;—"सप्तमो ह्यसावादित्यः पुत्रः"—इत्येव मैतिहासिका मन्यन्ते। ब्राह्मणेऽपि च,—"मृतपितर मण्ड मत्रापद्यत, तस्मिन्नादित्यः सप्तम इन्द्रोऽष्टम इति ह विज्ञायते"। अथ वा सप्तसङ्ख्याका युक्ता अस्य रश्मयः पुत्राः, तेनासौ सप्तपुत्रः। अथ वा नैव सङ्ख्याभिप्राय मेतत् सप्तपुत्र इति। आह;—कथं तर्हि? इति। उच्यते;—"सर्पण पुत्र मिति" एवम्; सर्पणा हि तस्य रश्मयो मुहूर्त्त मप्यनवस्थायिनो यस्य पुत्राः सोऽयं सप्तपुत्रः। "सप्त सृप्ता सङ्ख्या" षड्भ्यः सकाशात्। एवं सप्त-सङ्ख्योपेताः, सर्पणक्रियायोग्या वा † एत एव "आदित्यरश्मयः" आदित्यस्य पुत्राः "इति" मन्त्रविदो "वदन्ति" मन्यन्ते॥ ५ (२६)॥

सप्त युञ्जन्ति रथ मेकचक्र मेको अश्वो वहति सप्तनामा। त्रिनाभि चक्र मजर मनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः॥ सप्त युञ्जन्ति रथ मेकचक्र मेकचारिणं चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो ‡ वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति

* पा० ८ अ० १पा० १९, १७सू०।

† "सर्पणक्रियायोगिनो वा" ग।

‡ "०कोऽश्वो" ङ, च।

सप्तैन ऋषय स्तुवन्तीति वेद मपोतरन्नामैतस्मादेवा-
भिसन्नामात् संवत्सरप्रधान* उत्तरोऽर्द्धर्चस्त्रिनाभि-
चक्रं त्रृतुः† संवत्सरो ग्रीष्मो वर्षा हेमन्त इति संवत्सरः
संवसन्तेऽस्मिन् भूतानि ग्रीष्मो ग्रस्यन्तेऽस्मिन्वसा वर्षा
वर्षत्यासु पर्जन्यो हेमन्तो हिमवान् हिमं पुनर्हन्तेर्वा
हिनोतेर्वाजर मजरणधर्माण मनर्व मप्रत्यृत मन्यस्मिन्
यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्व-
मात्राभि स्तौति‡ पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तु-
तया§ पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्तशिशि-
रयोः समासेन‖ षलर आहुरर्पित मिति षड़्तुतया¶
अराः प्रत्यृता नाभौ षट् पुनः सृहतैः। द्वादशारं नहि
तज्जराय। द्वादश प्रधयश्चक्र मेक मिति मासानां मासा
मानात् प्रधिः प्रहितो भवति। तस्मिन्त्साकं त्रिंशता
न शङ्कवोऽर्पिताः षष्टिर्न** चला चलासः। षष्टिश्च†† ह
वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च
ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त

* "संवत्सरः प्रधानः" क, ख।
† "त्र्यृतुः" क, ख, ग।
‡ "सर्वमात्राभिष्टौति" ङ।
§ "पञ्चर्त्तुतायाः" क, ख, ग।
‖ "हेमन्तशिशिरसमासेन" क, ख, ग।
¶ षळृतुतायाः" क, ग. "षड़्तुतायाः" ख।
**, †† "षष्ठिर्न"—इति "षष्ठिश्च"—इति च ङ।

च वै शतानि विंशतिश्च संवत्सरस्याहोराचा इति च ब्राह्मणं विभागेन विभागेन॥ ६ ॥

॥ इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४, ४.

यथा चायं सप्तभिः सर्पणैर्वा रश्मिभिर्युज्यते तथेय मपरा ऋगे-तस्मिन्नेव सूक्ते "सप्त युञ्जन्ति०—०अधि तस्थुः"—इति*। 'सप्त'-सङ्ख्योपेताः सर्पणा वा 'युञ्जन्ति' योजयन्त्यात्मना रश्मयः 'रथं' रंहण मादित्यम्; उद्यन्नेव ह्यसावादित्यो रश्मिभिः युज्यते, रंहण-श्चासौ मुहूर्त्त मप्यनवस्थायित्वाद्। 'एकचक्रम्' एक एव ह्यसावन्त-रिक्षे चरति; इतराणि ज्योतींषि नाशयत्येव स्वेन तेजसा प्रकाशेन। 'एकोऽश्वः' एक एवाश्वः; अशनो व्यापनः सर्वभूतानाम् 'वहति' गच्छति 'सप्तनामा' सप्तस्तुतिः, सप्तपुत्रः—इत्येवमाद्याः सप्तसङ्ख्याकाः स्तुतयोऽस्य। अथ वा "सप्तास्मै रश्मयो रसानभिसन्नामयन्ति"—एतस्मिन् मण्डले, इति सप्तनामा। अथ वा "सप्तैन मृषयः (नमन्ति) स्तुवन्ति इति" सप्तनामा। "इद मपीतरत्" शब्दः "नाम" "एतस्मादेव";—"अभिसन्नामात्" तदपि स्व मर्थं प्रत्याययितुं क्रिया-पदस्य वा गुणभावेनाभिमुख्येन सन्नमति। स एवंलक्षणः सप्तचारी† व्यापनः सप्तनामा, सर्पणैः सप्तभिर्वा रश्मिभिर्युक्तो यदा वहति, उदयादारभ्य यावदस्त मिति, तदैवं वहन् निर्वर्त्तयन्तीति। उच्यते; —'त्रिनाभिचक्र मजर मनर्व्वम्' त्रिनाभिसंयुक्तं कालचक्रम्, चकन-

---

* ऋ० सं० २, ३, १४, २।

† "एकचारी" ग।

धर्म्मि, चकनं चलन मुच्यते; चरणधर्म्मि, क्रमणधर्म्मि वा। 'अजरम्' "अजरणधर्म्माणम्"। 'अनर्वम्' "अप्रत्यृत मन्यस्मिन्", अनाश्रित मित्यर्थः। 'त्रिनाभिचक्रं' "ऋतुः" हि "संवत्सरः",– "ग्रीष्मो वर्षा हेमन्त इति", अनेन ऋतुविभागेन एतदेवास्य त्रिनाभित्व मभिप्रेतम्। ऋतुभिर्हि संवत्सरो नह्यते सन्नह्यते इत्यर्थः *। "संवत्सरप्रधान उत्तरोऽर्द्धर्चः", नादित्यप्रधानः। "संवत्सरः संवसन्त्यस्मिन्"—इति प्रसक्तानुप्रसक्तम्; समस्तानि हि "भूतानि" एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः। "ग्रीष्मः, ग्रस्यन्तेऽस्मिन् रसाः" सूर्य्येण। "वर्षा, वर्षत्यासु पर्जन्यः", तदेतत् प्रत्यक्ष मेव। "हेमन्तः, हिमवान्", तत्र हि बहु भवति हिमम्। "हिमं पुनर्हन्तेर्वा" तद्धि हन्त्योषधि-वनस्पतीन् प्रकिरति; "हिनोतेर्वा" तर्पणार्थस्य, तेन हि पुष्यन्ति यवादयः; गमनार्थस्य वा हन्तेः, तद्धि गमयति क्षयं भूतानि। 'अजरं' तत् संवत्सरचक्रम् अजरणधर्म्मि; न हि संवत्सरस्य जरा नाम धर्मोऽस्ति। "अनर्वं" च तत् "अप्रत्यृतम्" अप्रतिगत मनाश्रित मन्यत्र क्व चित्। आह;– यत्र किम्? इति। उच्यते;—"यत्र" यस्मिन् 'इमा' "इमानि" 'विश्वा' "सर्वाणि" 'भुवना' "भूतानि" 'अधि' उपरि 'तस्थुः' "अभिसन्तिष्ठन्ते", आश्रितानि विनाश मुप-यान्ति। विनाशोऽपि हि संस्थोच्यते; संस्थितः पिता ममेत्युक्ते मृत इति गम्यते। तदेवंलक्षणं 'त्रिनाभि' कालचक्र मजरम्, य आदि-त्योऽभिनिर्वर्त्तयति, यच्चेद मभिनिर्वर्त्यते कालचक्रम्, तदेतदुभय

* "स वा अयं प्रजापतिः संवत्सर ऋतुषु च मासेषु च प्रत्यतिष्ठत् ते वा इम ऋतवश्च मासाश्च प्रजापतावेव संवत्सरे प्रत्यतिष्ठंस्त एतेऽन्योऽन्यस्मिन् प्रतिष्ठिताः"—इति ऐ० ब्रा० ४, ४, ३।

मप्यद्दं स्तौमीत्येव मस्य मन्त्रस्य पूर्वोऽर्द्धर्च आदित्यप्रधानः, उत्तरः संवत्सरप्रधानः ॥

आह ;—कथं गम्यते संवत्सरप्रधान उत्तरोऽर्द्धर्चः इति, न हि संवत्सरग्रहण मत्रास्ति ? उच्यते ;—'त्रिनाभिचक्रम्'—इत्येतस्मादनुसम्बन्धाद् । आह ;—एतदपि विशेषलिङ्ग मत्र नास्त्येव, त्रय ऋतवो नाभिशब्देनोच्यन्ते इति ? तस्मादेतदप्ययुक्त मेवेति । उच्यते ;—य एष पूर्वस्मिन्नर्द्धर्चे प्रकृतेन सूर्येणाभिनिर्वर्त्यते संवत्सरः, अस्मिंश्च सर्वाण्येतानि भूतान्यभि सन्तिष्ठते ; "तम्" एतं "संवत्सरम्" उत्तरस्मिन्नर्द्धर्चे प्रकृत्य मन्त्रकृत्* 'त्रिनाभिचक्रम्'—इत्येवमाद्याभिः "सर्वमात्राभिः" सर्वैः अवयवैः 'पञ्चारे चक्रे'*, 'षडरे'†, 'त्रीणि शतानि षष्टिश्च'‡, 'सप्त शतानि विंशतिश्च'§—इत्येवम्प्रकारैः "स्तौति"। तस्मात् सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादिहापि त्रिनाभिशब्द ऋतुविषय इत्युपपद्यते। षणा मृतूनां द्वौ द्वौ ऋतू समानस्वभावौ इत्यनेनाभिप्रायेण त्रित्वम् ‖ । अथैव मुक्त्वा "तं संवत्सरं सर्वमात्राभिः स्तौति" ; अधुना यथैतं सर्वमात्राभिः स्तौति, तथोपपादयति,—

---

* मन्त्रा ह्यपौरुषेया ऋषयो वै प्रकाशका एव तेषा मिति सिद्धान्ते कथ मेतत् सङ्गच्छते ? ऐतरेयके चैवं दृश्यत एव । तथाहि,—"सर्पै ऋषिर्मन्त्रकृत्" इति ऐ० ब्रा० ६, १, १ ।

* तस्मिन्नेव सूक्ते त्रयोदश्या मृचि (ऋ०सं० १, २२, ८, १३)।

† तस्मिन्नेव सूक्ते द्वादश्या मृचि (ऋ० सं० १, २२, ८, १२)।

‡ तस्मिन्नेव सूक्तेऽष्टचत्वारिंश्या मृचि (ऋ० सं० १, २२, ८, ४८) ।

§ तस्मिन्नेव सूक्ते एकादश्या मृचि (ऋ० सं० १, २२, ८, ११) ।

‖ "ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त०—० इमास्त्रिवः सतीरुपसदो द्विर्द्विरेकैका मुपायन्"—इति ऐ० ब्रा० १, ४, ६ ।

"पञ्चारे चक्रे परिवर्त्तमाने०—०शीर्यते स नाभिः"—"इति * पञ्चर्त्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चारे चक्रे' ऋतवः अत्र अरत्वेनाभिप्रेताः †। 'परिवर्त्तमाने' परिग्टह्येदं जगद् वर्त्तमाने। आह;—किम्? इति। उच्यते;—'तस्मिन्ना तस्थुः' तस्मिन्नवस्थितानि उपरि अधिरूढ़ानि। कानि? 'भुवनानि' भूतानि 'विश्वा' विश्वानि, सर्वाणि; कालचक्रे हि सर्व्वमेवेदं जगदधिरूढं बम्भ्रमीति। अथैव मतिमहतापि सर्व्वभूतचक्रेणाक्रान्तस्य कालचक्रस्य 'भूरिभारः' बहुभारः सन्नेवायम् 'अक्षः' संवत्सराख्यः 'न तप्यते' न सन्तापयति नापि सन्तापं यास्यतीत्यर्थः। अपि च 'सनादेव' चिरन्तन एव सोऽक्षः, तथापि न तप्यते, न वा तप्तोऽपि सन् सहसैव 'विशीर्यते'; नश्यति। आह;—यद्यक्षो न तप्यते शीर्यते वा; किमेव मतिबलीयसाक्षेण घृष्यमाणा नाभिः, तप्यते शीर्यते वा? इति। नेत्युच्यते;—'स नाभिः' अक्षो न शीर्यते न तप्यते। नाभिरादित्य एवाभिप्रेतः ‡। आह;—कथमेतद्गम्यते 'पञ्चारे चक्रे'—इत्यत्र अर-शब्देन ऋतवोऽभिप्रेता इति; न ह्यत्र विशेषलिङ्गमृतुना मरत्वेऽस्ति; अपि च ऋतवः षट् प्रसिद्धाः, इह च पञ्चार इति श्रूयते; तस्मादनुपपन्नम्? इति। उच्यते;—सूक्ते संवत्सरस्यावयवस्तुतिप्रायदर्शनादुपपद्यते। "पञ्चर्त्तवः

---

* "पञ्चारे चक्रे परिवर्त्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा। तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते स नाभिः॥"—इति ऋ० सं० २, २, १६, २ = १, १२, ८, १३।

† "पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन"—इति ऐ० ब्रा० १, १, १। "द्वादशमासाः पञ्चर्त्तवः संवत्सरः"—इति च ऐ० ब्रा० १, २, ५।

‡ पृ० ४९२ छ० ११पं० द्रष्टव्यम्।

संवत्सरस्येति च ब्राह्मणम्, हेमन्तशिशिरयोः समासेन"* एकत्वेनेत्यर्थः। तस्मादुपपद्यते। एवं पञ्चर्तुत्व मृतूनाम्, अरलं चावयवस्तुत्यभिसम्बन्धादिति॥

पञ्चपादं पितरम्०——०रर्पितम्"†। "षळर आहु रर्पित मिति षड्तुतया" संवत्सरस्य स्तुतिः। 'पञ्चपादं' संवत्सरम्; ऋतवो हि संवत्सरस्य पादाः, तैरसौ पतति गच्छति। 'पितरं' पालकं सर्वभूताना मुत्पादयितारं वा 'द्वादशाकृतिम्' द्वादशमासप्रविभक्तविग्रहम्, "द्वादशमासाः संवत्सरस्य"-इति‡ च ब्राह्मणम्। 'दिवे' द्युलोकस्य 'परे' परस्मे 'अर्द्धे' स्थाने योऽय मवस्थित आदित्यः, एतस्मिन् पञ्चपादं पितरं द्वादशाकृतिं 'पुरीषिणं' उदकवन्तं संवत्सरम् 'अर्पित माहुः' अविशेषेणान्ये ब्राह्मणाः। तस्मात् सर्वऋतवो वृष्टिमन्त इति ह विज्ञायते। तस्मात् संवत्सरस्योदकवत्त्व मुपपद्यते। 'अथ' पुनः 'इमे' 'अन्ये' य एते 'उपरे' उपर्यवस्थिताः, 'सप्त' ऋषयः §, एते 'विचक्षणं' विविधानां सर्वभूतकर्मणां द्रष्टार मेव मादित्यं 'चक्रे षड़रे' तस्मिन्‖ संवत्सराख्ये 'अर्पित माहुः'। अथ वा सप्तचक्र

---

* ऐ० ब्रा० १, १, १, द्रष्टव्यम्।

† "पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्॥"—इति ऋ०सं०२, ३, १६,१।

‡ "द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिः"—इति ऐ० ब्रा० १, ५,२।

§ "सप्तऋषीन् ज्योतींषि, तेभ्यः पर आदित्यः * * * इत्यधिदैवतम्। अथाध्यात्मम्,— * * * सप्तऋषीन् इन्द्रियाणि तेभ्यः पर आत्मा।"—इति प० दै० का० १०, ३, २।

‖ षड्वा ऋतव ऋतुश एव तत् संवत्सर माप्नुवन्ति"—इति ऐ० ब्रा० ४, ३, २।

आदित्यः ; स हि सप्तभीरश्मिभिस्त्वकते दीप्यते *; 'सप्त चक्रे'—इत्येकं पदं तस्मादेव मपि भवति॥ एव मेके संवत्सर मादित्यप्रविष्ट माहुः, अपरे पुन रादित्यं संवत्सरप्रविष्ट मित्येष समस्तार्थः॥ एव मेतस्या मृचि आदित्यसंवत्सरौ स्तूयेते। वक्ष्यति हि "चन्द्रमसा वायुना संवत्सरेणेति संस्तवः"†। संवत्सरस्य चक्ररूपेण नाभ्यादिभिः स्तुति-रुपपद्यते॥ "अराः प्रत्यृता नाभौ" प्रतिगता इत्यर्थः। "षट् पुनः सहृतेः" ते हि पञ्चसङ्ख्या मभिभूय वर्त्तन्ते॥

"द्वादशारं न हि तज्जराय"—इति। "द्वादशप्रधयश्चक्र-मेकम्"—इति ‡। "इति मासानाम्" एतौ पादौ भवत इति वाक्य-शेषः। "द्वादश प्रधयश्चक्रमेकं०—०न चलाचलासः"—इति § । "मासा मानात्"; मीयते हि तैः संवत्सरः। "प्रधिः प्रहितः" प्रक्षिप्य चक्रे निहितो "भवति", गण्डपुच्छः ‖ प्रधिरित्युच्यते¶। 'द्वादशप्रधयः' मास[illegible]। ना[illegible]संहताः सन्तः 'चक्र मेकं' भवति। तत्र च पुनः 'त्रीणि[illegible]भ्यारे चक्रे'—इ[illegible]कानि भवन्ति,—त्रय ऋतवो ग्रीष्मो वर्षा हेमन्त इति[illegible]पलिङ्ग ऋतु[illegible]लक्षणं चक्रम् 'क उ तत् चिकेत' कस्तु तत् याथात्म्य[illegible] च पञ्चार इ? 'तस्मिन्' चक्रे 'साकं' सह 'त्रिंशता न

* "सप्त ऋषयः संवत्सरस्यावयव आदित्ये सप्त"—इति "ऋषयः सप्त (सह आ-दित्यरश्मयः"—[illegible]० १२, ४, ४।

† प० दै० चक्रे परिवर्त्तमाने[illegible]

‡ ऋ० सं० १ [illegible]सनादेव न शीर्[illegible]

§ द्वादश प्रध[illegible]। [illegible] नभ्यानि क उ तच्चिकेत। तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः॥"—इति ऋ० सं० २, २, १२, २।

‖ "गण्डपुच्छः" [illegible]—इति [illegible]

¶ प्रधिरिति ने[illegible]पं० द्रष्टव्यम्। [illegible]प्रान्ते भूस्पर्शिभागे तस्य शक्तिः (अमरः २,८,५६)।

'शङ्कवोऽर्पिताः' त्रिशतान्यहोरात्राणि शङ्कव इवार्पितानि। 'षष्टिर्न' षष्ठ्यधिकानि त्रीण्यहोरात्रशतानि शङ्कव इवार्पितानि, प्रक्षिप्तानि। द्वितीयो नकारः समुच्चयार्थे। 'चलाचलासः' चलानि च अचलानि च; चलान्यनवस्थायित्वात्, अचलान्यहोरात्रात्मभावं न मुञ्चन्ति। आह;— कथं गम्यते अहोरात्राण्येतानीति? उच्यते;— संवत्सर-स्तुतिप्रायसम्बन्धाच्च। "षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहो-रात्राः इति * च ब्राह्मणं समासेन" अहोरात्रयोरेकत्वेनेत्यर्थः॥

"द्वादशारं न॒ हि०—०स्थुः तस्थुः †। 'न हि तज्जीर्यते', किं तर्हि? अन्यानि भूतानि जरयत् 'वर्वर्त्ति' च पुनःपुनर्वर्त्तते। 'परि द्यां' परिगृह्य द्यां च पृथिवीं च ततो वर्वर्त्ति। 'ऋतस्य' उदकस्य पूर्णम्, अथ वा 'ऋतस्य' आदित्यस्य स्वभूतम्, अथ वा 'ऋतस्य' यज्ञस्याङ्ग-भूतम् 'आ तस्थुः' पुत्राः। एतस्मिंश्चक्रे 'मिथुना' द्वन्द्वा इत्यर्थः। कस्य? 'अग्ने'। अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणम्यते; अग्नेः पुत्रा आतस्थुरिति। अग्निश्चात्रादित्य एवाभिप्रेतः ‡, तस्याहो-रात्राण्येव पुत्रत्वेनोच्यन्ते; तत्कृतत्वादहोरात्राणाम्। आह;— कियन्तस्ते पुत्राः? इति। उच्यते;—"सप्तशतानि विंशतिश्च"। ब्राह्मण

---

* ऐ० ब्रा० ४, २, ९ द्रष्टव्यम्।

† "द्वादशारं न॒हि तज्जराय॒ वर्वर्त्ति चक्रं परि॒ द्यामृ॒तस्य॑। आ पु॒त्रा अ॑ग्ने मिथुनासो॒ अत्र॑ स॒प्त श॒तानि॑ विंश॒तिश्च॑ तस्थुः॥"—इति ऋ० सं० २, ३, १९, १।

‡ "अग्निः सर्वा देवताः"—इति ऐ० ब्रा० २, १, २। "अग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त"—इत्यादि च ऐ० ब्रा० २, २, १। "सोऽग्निर्दिविस्पृगूर्द्ध्व उदश्रयत, सः स्वर्गस्य लोकस्य द्वार मवृणोत्, अग्निर्वै स्वर्गस्य लोकस्याधिपतिः"—इत्यादि ऐ० ब्रा० २, ४, ४।

मपि चैतस्मिन्नर्थे भवति;—"सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः—इति च ब्राह्मण महोरात्रयोर्विभागेन विभागेन" —इति *॥ एव मेतस्मिन् सूक्ते संवत्सरं "सर्वमात्राभिः" सर्वैरवयवैः "स्तौति"। तस्मादुपपद्यते "सप्त युञ्जन्ति"—इत्येतस्या मृचि संवत्सरप्रधानस्त्विनाभिचक्र मित्येषोऽर्द्धर्चः। तदेतत् सर्व मपि 'सप्तपुत्रं' सर्पणपुत्र मित्येतस्मात् पदात् प्रसक्तानुप्रसक्त मुक्तम्; प्रकृत मिदानीं वर्णयिष्यामः। किं पुनः प्रकृतम्? ऐकपदिकं समाम्नायव्याख्यानम् †। तत्र यदुक्तं तदुक्त मेव, यदनुक्तं तदक्तव्य मितीद मारभ्यते;—"सलि मविन्दच्चरणे नदीनाम्"—इति ‡॥ ६(२७)॥

॥ इति निरुक्तवृत्तौ नवमाध्यायस्य § चतुर्थः पादः॥ ४, ४.

ऋज्वर्थायां निरुक्तवृत्तौ जम्बूमार्गाश्रमवासिन आचार्यभगवद्दुर्गस्य कृतौ नवमोऽध्यायः ॥ (चतुर्थोऽध्यायः) समाप्तः ॥ ४ ॥

(एकार्थ[1]को[2]नुवयः[3]सुपर्णा[4]यदिन्द्र[5]जुष्टोदमूनाः[6]सस्मातपन्ती[7]षिरेण[8]मरुत्वाँ[9]तितउ[10]सक्तु[11]मिवतत्सूर्य[12]स्येन्द्रेण[13]समीर्मा-

---

* "त्रीणि च वै शतानि षष्टिश्च संवत्सरस्याहानि, तावान्त्संवत्सरः। * * *। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः, तावानेव संवत्सरः।"—इति ऐ॰ ब्रा॰ २, २, ७।

† पु॰ ३९८ पृ॰ १पं॰ द्रष्टव्या।

‡ पञ्चमाध्यायारम्भवाक्यमिदम् (२भा॰ १पृ॰)।

§, ‖ पु॰ १४६ पृ॰ "¶" द्रष्टव्यम्।

न्तासः[14]कायमानः[15]कनीनकेवा[16]पो[17]अदर्शि[18]सुविते[19]विद्यामदे-[20]वानआघा[21]द्यौर्मे[22]ऽदिति[23]रदितिरु[24]तस्माचा[25]हा[26]स्यवामस्य[27]सप्त-युञ्जन्ति सप्तविंशतिः* ॥ )

॥ इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

* पृ॰ १४६ पं॰ " * * " द्रष्टव्यम्।

## ॥ खण्डाधिकता ॥

ङ-नाम-पुस्तके तु,

(१) द्वितीयेऽध्याये "आ ते कारो (१४६पृ०)"—इति खण्डतः परस्तात्, "उतस्य वाजी (२४८पृ०)"—इत्यतस्य पुरस्तात्, "हंसः शुचिषत्*"—इत्यधिको दृश्यते; परं तत्र चास्त्येवैतत् खण्ड-सङ्ग्रहवाक्यम्,—"अथ निर्वचन० —— ० उतश्चोऽष्टाविंशतिः"—इति (२५२पृ०); हंसः शुचिषदित्यस्याच्च स्वीकारे त्वष्टाविंशति-रिति खण्डपरिगणनं व्याकुप्यत एव।

(२) एवं तृतीयेऽध्याये "त्वया वयं (२९७पृ०)"—इति खण्डतः परस्तात्, "यत्रा सुपर्णा (३०२पृ०)"—इत्यतस्य पुरस्तात्, "द्वा सुपर्णा †"—इत्यधिको दृश्यते; परं तत्रापि पुस्तके विद्यत एवैतत् खण्डसङ्ग्रहवाक्यम्,—"कर्मनामानि० —— ० द्वाविंशतिः"—इति (३६८पृ०); द्वा सुपर्णेत्यस्याच्च स्वीकारे तु द्वाविंशतिरिति खण्डपरिगणनं व्याकुप्यत एव।

(३) तथा चतुर्थेऽध्यायेऽपि "देवा नो (४४५पृ०)"—इति खण्डतः परस्तात्, "आ घा ता गच्छा (४६०पृ०)"—इत्यतस्य पुरस्तात्, "आयाहीन्द्र ‡"—इत्यधिको दृश्यते; परं तत्रापि पुस्तके विद्यत एवैतत् खण्डसङ्ग्रहवाक्यम्,—"एकार्थ० —— ० सप्तविंशतिः"—इति (५८९पृ०); आयाहीन्द्रेत्यस्याच्च स्वीकारे तु सप्तविंशति-रिति खण्डपरिगणनं व्याकुप्यत एव॥

---

* प० का० १२अ० ४पा० १ख०।

† प० का० १२ अ० ४ पा० २ ख०।

‡ प० का० १२अ० ४पा० ३ख०।

## ॥ अथ पञ्चमाध्यायः ॥

तत्र,

### ॥ प्रथमः पादः ॥

ॐ३म्। सखिं मविन्द्चरणे नदीनाम्। संख्यातं मेघम्। वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा*। वोढृतमो† ह्वानानां स्तोमो दूतो हुवन्नरौ‡ नरा मनुष्या नृत्यन्ति कर्मसु दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा (दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति।§) वावशानो वष्टेर्वा वाश्यतेर्वा। सप्त स्वसूररुषीर्वावशान इत्यपि निगमो भवति। वार्यं वृणोतेरथापि वरतमम्। तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्। तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यं गोपायितारो‖। यूयं स्थ युष्मभ्यमिति वान्ध इत्यन्ननामाध्यानीयं भवति। आमत्रेभिः सिञ्चता मद्यमन्धः। आसिञ्चतामत्रैर्मदनीय¶ मन्धोऽमत्रं पात्र ममा अस्मिन्नदन्त्यमा

---

* "ऊवं नरा" क, ख, ग।

† "वोळ्ळ्हतमो" क, ख, ग।

‡ "ऊवं नरा" क, ग। "ऊवन्नरो" च।

§ बन्धनीचिक्रान्तर्गत मेतन्न दृश्यते क-ख-ग-पुस्तकेषु (ऋ॰ सं॰ ७, ५, २१, २)।

‖ "गोपितारो" क, ख, ग।

¶ "मद्य" क, ख, ग।

पुनरनिर्मितं भवति पार्थं पानात्तमोऽप्यन्ध उच्यते नास्मिन् ध्यानं भवति न दर्शन मन्धन्तम इत्यभिभाषन्तेऽय मपीतरोऽन्ध एतस्मादेव। पश्यदक्षण्वान् न वि चेतदन्ध इत्यपि निगमो भवति ॥ १ ॥

"सस्निम्(१)"—इति*। एतदनवगतम्। अर्थाप्रतीतिरप्यनवगम्य इत्युच्यते। लक्षणासम्पन्नस्य संस्कारः खल्वपि अविज्ञात मित्युच्यते। तत्रैवं सति, क्वचित्प्रकृत्यादेः संस्कारस्यानवगमः; क्वचिदर्थाप्रतीतिरेव; क्वचिदुभयस्याप्यनवगमः, यथास्मिन्नेव सस्नि मिति; न विज्ञायते कि मप्युक्तं भवति? प्रकरणादत्र मेघाभिधेयम्; अन्यथान्योऽपि कश्चित् स्यात्, प्रकरणविशेषादेव। एवं सर्वत्रैवोपेक्षितव्यम्। प्रकरणसामर्थ्याच्छब्दोऽप्यर्थान्तरं भजते। "सस्नि मविन्दच्चरणे नदीना मपा०—०जानादस्नीनाम्" †। विश्वावसोर्देवगन्धर्वस्येय मार्षम्। घर्मोत्सादने विनियुक्ता। तत्रोक्तं परिषिक्ते गन्धर्वनामभिरुपतिष्ठन्त ऋत्विजो यजमानश्चेति। तासा मुपस्थानर्चा मियं मध्ये मैत्रायणीयके। 'सस्नि' "संस्नातम्", अद्भिः परिवेष्टितं, सर्वतः परिस्नुतं, धौतं वा "मेघम्", 'अविन्दत्' अलभतेन्द्रः। क्व पुन रलभत? 'चरणे नदीनां' यत्र नदना आपश्चरन्ति, गच्छन्ति, तत्रालभत; अन्तरिक्षलोके इत्यर्थः। आह;— लब्ध्वानन्तरं कि मकरोत्?

---

* १भा० ४०२ पृ० ४ख० २खं० (१), किञ्च ४०४पृ० १५ पं०।

† "सस्नि मविन्दच्चरणे नदीना मपा वृणोद्दुरो अश्मव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचदिन्द्रो दक्षं परि जानादहीनाम्॥"—इति ऋ० सं० ८, ७, २७, ६।

इति। उच्यते;—'अपावृणोत्' अपावृतवान्, उद्घाटितवानित्यर्थः। 'दुरः' द्वारः। आह;— कस्य? उच्यते;—'अश्मव्रजानाम्' अपा मश्मा मेघः, त मधि या व्रजति, स च यासां व्रजभूतो गोष्ठ-भूतः, ता अश्मव्रजा आपः; तासां निर्गमनद्वाराणि अपावृणोत्। या एता एवंलक्षणा आपः, 'आसाम्', अस्य च इन्द्रस्य 'गन्धर्वः' विश्वा-वसुः 'प्र वोचद्',—'अमृतानि' नामानि, छान्दसस्तुतियुक्तानि; तानि हि नित्यत्वादमृतानि। आह;— कस्मात्पुनरस्येन्द्रस्यामृतानि प्रावो-चदासाञ्चापाम्? इति। उच्यते, इतः;— यस्मादसाविन्द्रः 'दक्षं' दातारं मेघम्। अयम् आसाम् 'अह्नीनाम्' अयनानाम्, अपां द्वारेषु अपावृतेषु, दानाय समर्थो भविष्यति;—इत्येवं 'परि जानात्' परि-ज्ञातवान्। परिज्ञाय च 'अपावृणोत् दुरोऽश्मव्रजानाम्'। तस्मादस्येन्द्र-स्यामृतानि नामानि प्रावोचदङ्गिरसानेन प्रकारेणेन्द्रेण सर्व मेवेदं जगद् ध्रियत इति आसा मपि अनेन हेतुना प्रावोचदिति। एव मेतस्मिन् मन्त्रे 'चरणे नदीनाम् अविन्दत्' अपावृणोच्च दुरोऽश्मव्रजानाम्, दक्षञ्च परिजानात्'—इत्येकवाक्यतार्थसम्बन्धात् "अश्मि"-शब्दो मेघ-विशेषणम् उपपद्यते॥

अथ वा अथ मप्यस्य मन्त्रस्य पादव्यत्ययेनार्थः स्यात्;— संघातं मेघ मविन्द इलभतेन्द्रः पर्येष्यमाणः,क्काविन्दद्? चरणे नदीनाम्, अपाम्, अन्तरिक्षलोके। लब्ध्वा च स एव इन्द्रः, तं मेघं, दक्षं दातारम्, अह्नीनाम् अपां परिजानात्। परिज्ञाय च समर्थोऽय मिति ततस्तस्य द्वाराण्य-पावृणोत्। अश्मव्रजाना मपा मधो निर्गमनाय। तत एतानि निर्ग-तानि, अमृतानि उदकानि, सस्य-सम्पत्कराणि प्रावोचदिव प्राकथय-

दिव ;— असाविन्द्रो गन्धर्वः, आसां प्रजानां जीवश्च मेभिरुदकैरस्मद्दन्नै रिति। "इन्द्रो गन्धर्वः, तस्य मरुतोऽप्सरसः"—इति श्रूयते *। तस्मादिन्द्रस्यापि गन्धर्वत्व मुपपद्यत एव ; स च गोः† वज्रस्य धारयिता इति गन्धर्वः ‡ ॥

"वाहिष्ठः(१)"—इति §। एतदनवगतम्। "वोढृतमः"—इत्यवगमः। "वाहिष्ठो वां०—०भूत्वश्विना" ‖। गायत्री। विश्वमनसो वैयश्वस्येय मार्षम्; पितुर्वा व्यश्वस्य। प्रातरनुवाकाश्विनयोः शस्यते। 'नरा' हे नरौ! सर्वेषा मेव वोढ्णां स्तोमानाम्, आह्वातॄणाञ्च। य एव एष 'वाहिष्ठः' अतिशयेन वोढा, आह्वातृतमः, अय मेव 'दूतः' इव युवां 'ऊवत्' आह्वयदित्यर्थः। योऽय मेवंलक्षणः 'सोमः' अस्मत्प्रेरितः, स नित्यकाल मेव 'युवाभ्यां' 'भूतु' भवत्वित्यर्थः। हे 'अश्विना' अश्विनौ! इति सम्बोधनम्। 'स्तोमो दूतः'—इत्येताभ्यां समानविभक्त्यन्तत्वाद् "वाहिष्ठ"-शब्दः सोमविशेषण मित्युपपद्यते ॥

—निगमप्रसक्त मित्युच्यते ;—"मनुष्याः" अपि हि "नराः" उच्यन्ते ; ते हि "नृ[illegible]न्ति" गात्राणि, पुनः पुनः प्रक्षिपन्ति "कर्मसु" उपस्थितेषु तान्[illegible]। 'सन्निनाः ॥

---

* "गोर्वज्रस्य धारयि[illegible]तेन्द्रः। * * *। गन्धयते अर्दयति हिनस्ति देवशत्रूनिति गन्धर्वः इन्द्रः।"—इत्यादि द्रष्टव्यम्। १भा० ७७पृ० २१ पं०।

† गौः—१भा० ६, २२, ९७, २४५, २७८, ४०२। २भा० १७५, २११, ४७१। प० ६अ० १पा० २ख०, १२अ० १पा० ७ख०।

‡ "गान्धर्वी"-शब्दार्थो द्रष्टव्यः। १भा० १अ० ११ख० (६)।

§ १भा० ४०५पृ० ४पं०।

‖ "वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा। युवाभ्यां भूत्वश्विना ॥"—इति ऋ० सं० ६, २, १९, १।

"दूतो(३) जवतेर्वा गत्यर्थस्य"*; स हि गच्छति। "द्रवतेर्वा" गत्यर्थस्यैव। "वारयतेर्वा"; स हि वारयत्यनर्थान्॥

"वावशानः(४)"—इति अनवगतम्†। "वष्टेर्वा" कान्त्यर्थस्य, "वाश्यतेर्वा" शब्दार्थस्य वावशानः स्यात्। "सुप्तस्वसृररुषीर्वावशानः ०—०पूषणस्य"‡। त्रितस्याप्तस्यैव मार्षम्। आग्नेयी। त्रिष्टुप्। प्रातरनुवाकाश्विनयोः शस्यते। 'सप्त' 'स्वसृः' स्वसारो भगिन्य इव पाह्यर्च्चिषः समानजन्मत्वात्। अथवा सह सर्पणात् स्वसारः; ता हि सह सर्पन्ति 'अरुषीः' अरोचनाः, दीप्ता इत्यर्थः। या एवंलक्षणाः अर्च्चिषः, ताः, अग्निः 'वावशानः' कामयमानो वावश्यमानो वा, शब्दं कुर्वाणः स 'विद्वान्' आत्मीय मधिकारान् जानानः, 'मध्वः' घृतस्य हविषः पूर्णः, 'उज्जभार' ऊर्द्धं हृतवानेषां लोकानां 'दृशे कं' दर्शनायेत्यर्थः। एवं ता ऊर्द्धं कृत्वा दर्शन मभिव्यञ्जयित्वा जनानाम् 'अन्तः' आदित्यस्य मध्ये यदन्तरिक्षं तत्र, 'येमे' तत्रोपनियमितवान् तद्धवि: 'पुराजाः' अग्निः; स हि सर्वदेवेभ्यः प्रथम एव जातः'§,। 'इच्छन्' 'वव्रिं' रूपं 'पूषणस्य' पूष्णः, आदित्यस्य। कथं नामासावादित्यो दीप्तरूपः स्यात्? अतोऽन्तरादित्यस्य येमे। तत्रा-

---

* १भा० ४०५पृ० ८पं।

† १भा० ४०५पृ० ९पं।

‡ "सुप्त स्वसृररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम्। अन्तर्येमे अन्तरिक्षे पुराजा इच्छन् वव्रि मविदत् पूषणस्य॥"—इति ऋ० सं० ७, ५, २२, ५।

§ तथा चैतरेयकम्,—"अग्निर्वै देवयोनिः"—इति २, १, २। किञ्च "अह मस्मि
३ १ २
प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम।"—इति सा० आ० आर० १, ९, ९।
३ २　३ १ ३ १ २　३ १ २　३ १ २　३ १ २

सावेत मर्थम् 'अविदत्' अलभत इत्यर्थः। स एव दीप्तरूप आदित्यः संवृत्त इत्यभिप्रायः॥ एव मत्र "स्वसृर्वावशानः"—इत्यनेन सामानाधिकरण्याच्छन्दसारूप्याच्च "वावशाने"-इत्यस्य कान्त्यर्थत्वं शब्दार्थत्वञ्च उपपद्यते॥

"वार्यम्[५]"—इति * अनवगतम्। वृणोतेर्यद्वरयितव्यं भवति, तद्वार्यमित्युच्यते। अथापि कदाचिद् वार्यशब्देन यद्वरतमं श्रेष्ठतमं किञ्चिद्भवति, तदुच्यते। "तद्वार्यं वृणीमहे०——०यदर्यमा" †। विश्वमनस इव मार्षम्। मैत्रावरुणे सूक्ते। 'तद्वार्यं वृणीमहे' वरयितव्यं वरणार्हं धनं वृणीमहे। हे स्तोतारः! 'वरिष्ठं', 'गोपयत्यं' "गोपायितव्यं", यद्रक्षणार्ह मित्यर्थः। अथ वा गोपयत्यं गोपितारो यस्य धनस्य यूयं भविष्यथ, तद्वृणीमहे। अथ वा युष्मभ्यं यौष्माकीणं यद्भवति, तद्वृणीमहे। किञ्च; नित्यकाल मेव मित्रावरुणार्यमाणः 'यत्' 'पान्ति' रक्षन्तीत्यर्थः, तद्वृणीमहे। एव मत्र च मित्रावरुणार्यमाणो यत् पान्ति इत्यनेन सम्बन्धात् "वार्य"-शब्दो धनविशेषण मित्युपपद्यते॥

"अन्धः[६]"—इति‡। अनेकार्थ मनवगतम्। आध्यानीय मित्यर्थप्रतीतिः। प्रार्थनीय मन्नं भवति सर्वस्यैव। "अध्वर्यवो भरतेन्द्राय ०——०देष वष्टि" §। गृत्समदस्येय मार्षम्। रात्रिपर्य्याये शस्यते।

* १ भा० ४०५ पृ० १५ पं०।

† "तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्यमा॥"—इति ऋ० सं० ६, २, १२, २।

‡ १ भा० ४०६ पृ० ३ पं।

§ "अध्वर्यवो भरतेन्द्राय सोम मामत्रेभिः सिञ्चता मद्य मन्धः। कामी हि वीरः सद मस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि॥"—इति ऋ०सं०२,६,१२,१।

होतुः शस्त्रे विनियुक्ता। अस्येव च शस्त्रस्य याज्यैषा। हे 'अध्वर्यवः!' 'भरत' प्रापयतेमं 'सोमम्', एतस्माद्धविर्द्धानादुत्तरवेदिम्, 'इन्द्राय' इन्द्रार्थम्। अथ वा 'भरत' धारयताग्नेरुपरि। ततस्त्वेनम् 'अमत्रेभिः' अमत्रैः पात्रैः, एभिः सोमचमसैः, वषट्कारे प्राप्ते 'आ सिञ्चत' तस्मिन्नग्नौ। 'मद्यं' मदनीयम्, एतत्सोमाख्यम् 'अन्धः'। कस्मात् पुनरेवं ब्रवीमि? इतः— यस्मात् 'कामी हि वीरः' कामयत वीरः इन्द्रः 'अस्य' सोमस्य 'सदं' सदैव, नित्यकाल मेव 'पीतिं' पान मित्यर्थः। तस्मात् कारणात् 'जुहोत', तस्मै 'वृष्णे' वर्षित्रे इन्द्राय, एतं सोमम्। किमेत मेव केवलं सोम मेष कामयते? ने त्युच्यते;— 'तदिदेष वष्टि' तत्तत्सोमप्रदान मेष इन्द्रो वष्टि कामयत इत्यर्थः; न केवलं रात्रिपर्यायेष्वित्यर्थः। तस्मादासिञ्चत इमं सोमं मा विलम्बध्व मित्यभिप्रायः। एव मत्र दानसम्बन्धात् "अन्धः"-शब्दोऽन्नार्थ उपपद्यते। पठित मपि चान्ननामसु * अनेकार्थत्वात् तु सन्दिह्यते इत्येष निगम उपात्तः॥

निगमप्रसक्त मुच्यते।—"अमत्रं पात्रम्; अमा अस्मिन् अदन्ति" अश्नन्तीत्यर्थः। अमा-शब्देन पुनर्यदनिर्मितपरिमाणं किञ्चिद् भवति, तदुच्यते; न हि तेषां परिमाण मस्ति, यावन्तस्तस्मिन्नदन्ति। "पात्रं पानात्" पीयते हि तेन॥

तमोऽप्यन्ध उच्यते। किं कारणम्? "नास्मिन्" "ध्यानं" दर्शनं कृतं "भवति"' चक्षुषो दृष्टि-निरोधाल्लौकिका अपि दर्शननिरोधे सति "अन्धन्तम इत्यभिभाषन्ते"। "स्त्रियः सतीस्ताँ उ मे०—०

---

* १ भा० १०४ पृ० (१)।

पिता सत्"*। अस्यवामीये। त्रायतेः पालनार्थस्यात्र स्त्री-शब्दो निरुच्यते। पालयित्र्यः एवैताः सत्यः कृत्स्नस्य जगतः। एत एव रश्मयो नाड़ीभिः आध्यात्मिकीभिः अनुप्रविश्य प्राणिशरीरेष्वन्नपक्तिं कुर्वन्ति, ततः स्थितिरुपजायते; एत एव वर्षप्रदानेन कृत्स्नं जगत् त्रायन्ते; तस्मात् त्राणात् 'स्त्रियः' एताः। 'तान्'—इति नकारान्तं पदम्। 'उ'—इति पदपूरण एव। तानेवंलक्षणान्रश्मीन् पालयितॄन् सतः। 'मे' ममेति मन्त्रदृगात्मानं निर्दिशति। ममैतान् पुंस आहुः। एत एव रश्मयो 'बहुप्रजानाः' इत्येवं ब्रह्मविदः आहुः। एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति। जगत्त्रायन्ते एत एव बुद्धेः सर्वार्थप्रकाशित्वेनोपकुर्वन्तीत्यभिप्रायः। आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता, तदवयवभूताश्च रश्मयः, तेन ह्यन्तर्गता आध्यात्मे पुरुषस्य विज्ञानम् उपहरन्ति। अतस्तेषां बहुप्रजानत्व मुपपद्यते। आह;— कः पुनरेतान् रश्मीनेवङ्गुणयुक्तान् पश्यतीति? 'पश्यदक्षण्वान् न वि चेतदन्धः' यो हि अक्षण्वान् भवति, दर्शनवान्, विज्ञानवान्, वेदार्थविज्ञानवान्, वेदार्थविज्ञानेनोपजनितप्रज्ञः, स एव ताभ्यां गुणाभ्यां युक्तान् पश्यन्नास्ते नित्यकालं नित्ययुक्तत्वात्। इतरस्तु योऽन्धः अध्यानवान्, अश्रुतवेदोपनिषत्कः, स मन्दबुद्धित्वात् 'न विचेतत्' नैतान् याथात्म्यतः पश्यति, न विजानातीत्यर्थः। यः पुनः एवम् एतान् याथात्म्यतः पश्यति, स एव 'कविः' क्रान्तदर्शनो भवति, परिनिष्ठितविद्य-

---

* "स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान् न वि चेतदन्धः। कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात् स पितुष्पितासत्॥"—इति ऋ० सं० १, २, १७, १।

इत्यर्थः। स च परिनिष्ठितविद्यत्वेनैव 'पुत्रः' पुरुणो बहुनोऽंहसस्त्रातः। यस्मात् एवङ्गुणयुक्तः, स 'ईम्' आ चिकेत'। 'ईम्'—इति पदपूरणः। 'आ चिकेत' स एवैतानेवम् आभिमुख्येन यथावत् पश्यति ; नेतरो मूढः। यस्त्वेतानेवं पश्यति, स एव 'पितुः' अपि 'पिता' भवतीत्यर्थः; स हि आधिदैविकम् आत्मानम् अभि सम्पन्नो भवति ; न हि तस्य पिता नाम कश्चित्; स एव हि सर्वेषां जनानां पिता भवतीत्यभिप्रायः। एवमेतस्मिन् मन्त्रे य एवाचक्षाणान् भवति। स एव पश्यतीत्यस्य सन्निधौ 'न विजानात्यन्धः'-शब्दप्रयोगात् अदर्शनलक्षणं तमः 'अन्धः'-शब्देनोच्यत इत्युपपद्यते॥ १ ॥

असंश्चन्ती भूरिधारे पयस्वती। असज्यमाने इति वाव्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। वनुयाम वनुष्यत इत्यपि निगमो भवति। दीर्घप्रयज्यु मति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः। दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु दूढ्यं दुर्धियं पापधियं पापः पातापेयानां पापत्यमानोऽवाङेव पततीति वा पापत्यतेर्वा स्यात् तरुष्यतिरप्येवङ्कर्मा। इन्द्रेण युजा तरुषेम वृत्रमित्यपि निगमो भवति। भन्दना भन्दते स्तुतिकर्मणः। पुरुप्रियो भन्दते धामभिः कविरित्यपि निगमो भवति। स भन्दना उदियर्त्ति

प्रजावतीरिति च । अन्येन मदाहनो याहि तूयम् । अन्येन मदहनो गच्छ क्षिप्र माहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्या*दृषिर्नदो भवति नदते स्तुतिकर्म्मणः । नदस्य मा रुधतः काम आ गन् । नदनस्य मा रुधतः काम आगमत् संरुद्धप्रजननस्य ब्रह्मचारिण इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥

"असश्चन्ती(७)"—इति† अनवगतम् । "असज्यमाने इति वा" —इत्यर्थप्रतीतिः; "अव्युदस्यन्त्याविति इति वा"—इति । "असंश्चन्ती भूरि ०——० यन्मनुर्हितम्" ‡ । भरद्वाजस्येय मार्षम् । अभिप्लवस्य षडहस्य पञ्चमेऽहनि तृतीयसवने वैश्वदेवे शस्त्रे द्यावापृथिवीये निविद्धानीये सूक्ते शस्यते । 'असश्चन्ती' असज्यमाने असंश्लिष्यमाणे परस्परतः, एते द्यावापृथिव्यौ । 'भूरिधारे' बहूदकप्रक्षरणस्वभावे एव; अथवा बहु भूतं धारयित्र्यौ । 'पयस्वती' उदकवत्यौ । 'घृतम्' उदकम्, द्वे अप्येते 'दुहाते' प्रपूरयेते; इतरेतरसम्भोगेन । 'सुकृते' शोभनकृते; अथवा शोभनानां स्वाधिकारप्रयुक्तानां कर्मणां कर्त्र्यौ । 'शुचिव्रते' शुक्लकर्मणी इत्यर्थः । 'राजन्ती' दीप्यमाने स्वैः स्वैः तेजोभिः । 'अस्य' 'भुवनस्य' भूतजातस्य 'रोदसी' रोधसी,

---

* "०तस्मादाहन स्या"—इति ख, ग ।

† १ भा० ४०६ पृ० ८ पं० ।

‡ असंश्चन्ती भूरिधारे पयस्वती घृतं दुहाते सुकृते शुचिव्रते राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चन्तं यन्मनुर्हितम् ॥" इति ऋ० सं० ५, १, १४, १ ।

रोधयित्र्यौ। ये एते एवंलक्षणे द्यावापृथिव्यौ, ते 'अस्मे' अस्मभ्यं 'रेतः' उदकं 'सिञ्चन्तम्' अभिमते काले। किंलक्षणं पुनः सिञ्चन्तम्? 'यत्' 'मनुर्हितम्' मनुष्यहितम्, अक्षारं, सस्य-सम्पत्कर मित्यभिप्रायः। एव मेतस्मिन् मन्त्रे 'भूरिधारे'-इत्येवमादिभिः समानविभक्त्यन्तत्वात् "असश्चन्तौ"—इति द्यावापृथिवीविशेषण मुपपद्यते। "असज्यमाने इति" न हि ते सज्येते परस्परतः "अव्युदस्यन्त्यौ वा" अनुपक्षियन्त्यौ अविपर्यस्यन्त्यौ वा; न हि ते उपक्षीयेते विपर्यस्येते वेति॥

"वनुष्यति(८)"—इति* "हन्तिकर्म्मा" हन्त्यर्थे वर्तमानः, "अनवगतसंस्कारो भवति"। "यदिन्द्राग्नी जना इमे०——०मन्युके समे"†। नाभाकस्यार्षम्। महाव्रते महदुक्थे शस्यते। अस्याः पुनरष्टाक्षराः षट् पादाः। छन्दसां पुनरनुक्रमण्यां शौनकेनाग्नि मस्तोषीत्यत आरभ्य जागतानि त्रीणि सूक्तानि अनुक्रान्तानि, तेषा मपीयं मध्ये हे 'इन्द्राग्नी!' 'यत्' यदा 'इमे' 'जनाः' येऽस्मदीयाः परकीयाश्च उभयेऽपि 'वि ह्वयन्ते' व्यत्ययेनेतरेतरम् आह्वयन्ते विजिगीषुतया। 'तना' सन्ततया 'गिरा' वाचा; अथ वा 'तना' धनेन निमित्तभूतेन जेतव्येन पुरस्कृतेन विह्वयन्ते। तदा युवाम् 'अस्माभिः' अस्मदीयैः 'नृभिः' मनुष्यैः संहितौ भूयास्तन्ते

---

* १भा० ४०६ पृ० १२ पं०।

† "यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा। अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे॥"—इति ऋ० सं० ६, २, २५, १।

'वयं' युवाभ्यां सहिताः 'सासह्याम' पुनःपुनरभिभवेम। कान्? य एते 'पृतन्यवः' पृतना मस्माभिः सह कर्तुम् इच्छन्ति, तानभिभवेम। किञ्च, 'वनुयाम वनुष्यतः' ये च एतेषाम् अस्माभिः सह सम्पन्ना एव सम्प्रहारीभूता वनुष्यन्त्यस्मान् घ्नन्त्येव, एतांश्च वनुष्यतः वनुयामो वयं हन्म इत्यर्थः। कथं पुनर्हन्म? उच्यते यथा,—'नभन्ता मन्यके समे' युवयोरनुग्रहाद्धन्म इत्यभिप्रायः। एव मेतस्मिन् मन्त्रे "सासह्याम पृतन्यतः"—इत्येतस्मिन् सङ्ग्रामाधिकारे वनुष्यतेर्हन्त्यर्थ मुपपद्यते; न हि सङ्ग्रामे हननादन्यत् कर्त्तव्य मस्ति, यत् क्रियते॥

"इन्द्रावरुणा युव मध्वराय ०——० सु दूढ्यः"*। वसिष्ठस्येय मार्षम्। जगती। तार्त्तीयसवनिकीये मैत्रावरुणस्य शस्त्रे विनियुक्ता। हे 'इन्द्रावरुणौ!' 'युवम्' युवा मित्यर्थः। 'अध्वराय नः' यज्ञाय अस्माकं 'विशे' जनाय सर्वस्मै मनुष्यजनाय, अस्मत्सर्वकामाय 'महि' महत्, 'शर्म' सुखं 'यच्छतम्' दत्त मित्यर्थः। 'दीर्घप्रयज्यु' "दीर्घप्रततयज्ञं", नित्ययायजूकम्, अग्निहोत्रिणम् 'अति यो वनुष्यति' "अभि जिघांसति" यो निहन्तु मिच्छति। किं तस्य? इत्युच्यते,— 'वयं जयेम' 'पृतनासु' सङ्ग्रामेषु 'दूढ्यः' "दुर्द्धियं" पापधियं, पापया धिया हि दीर्घप्रततयज्ञ मभि जिघांसति। एव मत्रापि प्रकरणाद् "वनुष्यतिः" हन्त्यर्थः। अल्पप्रयोगविषयत्वाद् भाष्यकारेण निगमद्वयं पठितम्॥

---

* "इन्द्रावरुणा युव मध्वराय नो विशे जनाय महि शर्म यच्छतम्। दीर्घप्रयज्यु मति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः॥"—इति ऋ० सं० ५, ६, २, १।

व्याख्यानप्रसक्त मुच्यते;— "पापः पाताऽपेयानाम्" अपेयान्य-लेह्यानि यानि, तान्यसौ पिबति, विषयप्रसक्त इत्यर्थः। "पापत्य-मानः" पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा। "अवाङेव" नरक मेव प्रति "पतति" असौ, तस्माद् "वा" पापः॥

"तरुष्यतिः(९), अप्येवङ्कर्मा" हन्तिकर्मेत्यर्थः*। "ऋभुर्ऋभुभिः ०——० तरुषेम वृत्रम्"†। वसिष्ठस्येय मार्षम्। त्रिष्टुप्। अविवाक्ये तृतीयसवने, वैश्वदेवे शस्त्रे, आर्भवे सूक्ते, निविद्धानीये शस्यते। ऋभवः उरुभासो वयम्, उरुभाभिः 'ऋभुभिः' देवैः सहिताः 'अभि वः स्याम' अभिभवेम युष्मान् वयम्। हे 'विभ्वः!' 'विभुभिः' प्रभूत-बलैः युष्माभिः 'शवसा' स्वेन बलेन, एतेषा मभिभवितॄणां 'शवांसि' बलान्यभिभवेम। किञ्च; 'वाजः' 'अस्मान्' 'अवन्तु'। कस्मिन्? 'वाजसातौ' सङ्ग्रामे; 'इन्द्रेण' च 'युजा' संयुक्ताः सन्तो वयं 'तरुषेम' हन्मैनं 'वृत्रं' शत्रु मित्यर्थः। अभिभवाधिकारात् तरुष्यतिर्हन्त्यर्थ उपपद्यते॥

"भन्दना(१०)‡, भन्दतेः स्तुतिकर्मणः" स्तुत्यर्थे वर्त्तमानस्य। "पिता यज्ञाना०——०धामभिः कविः"§। विश्वामित्रस्येय मार्षम्।

---

* १मा० ४०६पृ० १४ पं०।

† ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि। वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम्॥"—इति ऋ० सं० ५,४,१५,१।

‡ १मा० ४०६ पृ० १८पं०।

§ "पिता यज्ञाना मसुरो विपश्चितां विमान मग्निर्वयुनं च वाघताम्। आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः॥"—इति ऋ० सं० १,८,२०,४।

पृष्ठ्यस्य प्रथमेऽहनि आग्निमारुते शस्त्रे, निविद्धानीये, वैश्वानरीये सूक्ते शस्यते। 'पिता यज्ञानां' पालयिता यज्ञानाम्, 'अग्निः', 'असुरः' प्रज्ञावान् 'विपश्चितां' प्रज्ञावता मपि मध्ये प्रज्ञावान्, 'विमानं' विनिर्माणं कृत्स्नस्य जगतः; अग्निनैव ह्यग्निहोत्रादिकर्मद्वारेण कृत्स्नं जगद्विनिर्मीयते। 'वयुनञ्च' प्रज्ञानमय मेव 'वाघताम्' ऋत्विजाम्, ऋत्विजो ह्यय मेवाग्निः विशिष्टं यज्ञसाधन मित्येवं मन्यन्ते। योऽय मेवंलक्षणोऽग्निः 'आ विवेश' 'रोदसी' द्यावापृथिव्यौ 'भूरिवर्पसा' बहुरूपत्वेन, त मेवङ्गुणयुक्त मग्निं 'पुरुप्रियः' बहुकामप्रियः स्तोता, 'भन्दते' स्तौति, 'धामभिः' नामभिः अनेकैः प्रकारैः, 'कविः' क्रान्तदर्शन इत्यर्थः। पुरुप्रियो हि स्तोता धामभिरग्नेः किमन्यत् स्तुनेः स्यात्? तस्मादुपपद्यते स्तुत्यर्थत्व मस्य ॥

"स भन्दना उदियर्त्ति० — ०याचनात्"*। भौमोऽत्रिः, तस्यैव मार्षम्। जगती। "प्र त आशवः पवमान धीजवः"—इत्यष्टाचत्वारिंशत्के महासूक्ते† एकचत्वारिंशत्तमी पावमानसौमी। यदिम मयाज्ञं कर्मोपनमेत्तत्सुयामह मेतं सोमं तच्चेति, य एवं नित्यकाल मास्ते 'सः' एष साम्प्रत मस्मिंत्सोमकर्मणि उपनीते हे सोम! तव 'भन्दनाः' स्तुतीः 'उदियर्त्ति' उदीरयति। 'प्रजावतीः' प्रजासंयुक्ताः, प्रजालिङ्गा इत्यर्थः। 'विश्वायुः' विश्व मयतीति विश्वायुः, सर्वत्राप्रतिहतप्रज्ञान इत्यर्थः; सर्वतो वा विश्वायुः। 'विश्वाः' सर्वप्रकाराः, नाम-बन्धु-

---

* "स भन्दना उदियर्त्ति प्रजावतीर्विश्वायुर्विश्वाः सुभरा अहर्दिवि। ब्रह्म प्रजावद्रयि मश्वपस्त्यं पीत इन्द्रविन्द्र मस्मभ्यं याचतात् ॥"—इति ऋ० सं० ७,२,२०,१।

† ऋ० सं० ९म० ५अ० १सू०(=१२—२१व०) १—४८ ऋ०।

कर्म-रूप-सम्बन्धात् स्तुतीताम् ; नाम्ना, बन्धुभिः, कर्मणा, रूपेणेति ह्युक्तम्। 'सुभराः' सुभृताः, सुपुष्टाः; स्थानकरणानुप्रदानवत्यो युष्मद्गुणैरलङ्कृताः। 'अहर्दिवि' अहनि वा रात्रौ च, रात्रिपर्य्यायाभिप्रायेण नित्यकाल मेवेत्यभिप्रायः। कं पुनरर्थ मुपेत्य स्तुतीरुदीरयति? 'अन्नं प्रजावत्' अन्नं प्रजासंयुक्तम् भोक्तृसहितम्। अपि च 'रयिम्' धनं गो-हिरण्यादि। 'अश्वपस्त्यम्' अश्वैः पतनसमर्थैः शीघ्रैः संयुक्तम्। 'पीतः' त्व मस्माभिरस्मिन् कर्मणि। हे 'इन्दो' सोम! इद मस्मदर्थं 'याचतात्' याचस्वेत्यर्थः। एत मर्थ मभिप्रेत्य स्तुतीरुदीरयति। भन्दना उदियर्त्तीत्युदीरणसम्बन्धात् स्तुतय एताः "भन्दना"-शब्देनोच्यन्त इत्युपपद्यते। पूर्व माख्यातपदसम्बद्ध मुदाहरणं "पुरुप्रियो भन्दते धामभिः"—इति(१३पृ०२१पं०), इदन्तु नामरूप-सम्बद्धं "स भन्दना उदियर्त्ति प्रजावतीः"—इति (१४पृ० २१पं०) च। उभयथा प्रयोगोऽस्तीत्युभय मुपप्रदर्शितम्, अल्पप्रयोगविषयत्वाच्च॥

"आहनः(११)"—इति *। एतत् पदं सम्बोधन मनवगतम्, अप्रतीयमानार्थत्वात्। "आ हंसि"—इत्यर्थप्रतीतिः। "न तिष्ठन्ति न निमिषन्त्येते०—०रथ्येव चक्रा" †। यमस्य यम्याश्च संवादसूक्तम्; तत्र यमस्येय मार्षम्। स यमीं मैथुनाय प्रार्थयमानां ब्रवीति;—हे यमि! मामंस्था साम्प्रतं रहो वर्त्तत इति, किन्तु 'न तिष्ठन्ति' मुहूर्त्त

---

* १ भा० ४०७ पृ० ३ पं०।

† "न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति। अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा॥"—इति ऋ० सं० ७, ६, ७, २।

मपि, एते जनाः रन्ध्रान्वेषणतत्परा इत्यभिप्रायः। अपि च, 'न निमिषन्ति' अनिमिषाः, आदरवन्त इत्यभिप्रायः। के पुनस्ते? इत्युच्यते;—'एते देवानां' स्पशाः; य इह एतस्मिन् लोके 'स्पशः' स्पाशयितारः, कृताकृतानां कर्मणाम्। के पुनस्ते? इति। उच्यते;—अहश्च, रात्रिश्च, उभे च सन्ध्ये, सूर्याचन्द्रमसौ, वायुश्च, अन्तरपुरुषश्च इत्येवमादयः; न ह्येतेषां किञ्चिदविदितं परोक्ष मस्ति इत्यभिप्रायः। अतो ब्रवीमि;—'अन्येन' अन्यकुलजेन केन चित् पुरुषेण, 'मत्' मत्तः, त्वम् हे 'आहनः!' मैथुनं 'याहि' 'तूयं' "क्षिप्रम्"। "आ हंसि इव" असभ्य मेतद् "भाषमाणा" त्वम्, नाह मेतदसभ्यं श्रोतु मप्युत्सहे तव; किं पुनः कर्तुम्? तस्मान्मत्तोऽन्येन मैथुनार्थं चर। 'तेन' एव सह 'वि वृह' अभ्युद्यच्छस्व आत्मानं मैथुनकर्मणि। 'रथ्येव चक्रा' रथचक्रे इव; यथैक मक्षं रथचक्रे द्वे अभ्युद्यतः, एव मेकमनस्त्व मुपपाद्य तेनैकभूतेन मनसा अचेष्टेवोभे ऽपि शरीरे, त्वञ्च तस्य कामिनः सकाम्, स च तव, तेनैव सह तवैतस्मिन्नर्थे एकमनस्त्व मस्त्विति, न मया सार्द्ध मेतस्मिन्नर्थेऽभ्युद्यच्छमाना न मां शक्ष्यसे कम्पयितु मित्यभिप्रायः। एव मेतस्मिन् मन्त्रेऽनिष्टत्वान्मैथुनसमाचारस्य "आहनः"— इत्येतद् यमी-विषयं सन्धानम्। आहन्यत "इव" हि स यमं तयाऽनेन दुर्वचनेन। तस्मात् सैव सम्बोध्यते आहनः! इति। "एतस्मात्" एव कारणात् "आहनः स्यात्", यो ऽयम् उपदेशः स्त्रियै, असावपि हि यस्य सन्निधौ सङ्कीर्त्यते, स आहन्यत इव असभ्यत्वात्; तस्य अयज्ञियो वै पुरुषोऽमेध्य आहनः स्याज्जायत इति विज्ञायते॥

"नदः[१९]"—इति * एतदनवगतम्। "ऋषिः नदो भवति" —इति शब्दस्य पर्यायेण तत्त्ववचनम्। "नदतेः स्तुतिकर्मणः" इति व्युत्पत्तिः। नदिता वा नदतीवेत्यर्थप्रतीतिः। "नदस्य मा रुधतः ० —० धयति श्वसन्तम्" †। अगस्त्यलोपामुद्रा-ब्रह्मचारिसूक्त-संवादे लोपामुद्राया इय मार्षम्। सा अब्रवीदगस्त्यं भर्त्तार मभि-प्रेत्य 'नदस्य' "नदनस्य" नदितुर्वा देवतास्तोतुः अस्यागस्त्यस्य 'रुधतः' संरुद्धवतः इन्द्रियग्रामं 'मा' माम् अयं 'कामः' 'आगन्' आगतवान्, येनाहं साम्प्रतं पीड्ये। स पुनरेवं न जाने। किम् 'इतः' एव 'आ जातः' अस्मच्छरीराज्जातः, ममोपरि ह्यभिव्यक्तोऽस्मत्पीड़नाय;— अथ वा 'अमुतः' अगस्त्यशरीरात्? पुरुषगुणानुस्मरणाद्धि स्त्रियाः कामो जायते—अभिव्यज्यते, पुरुषस्य च स्त्र्यनुस्मरणात्। अत एव "स्मरः"—इति काम उच्यते। तस्मादुपपद्यते इतो वास्मच्छरीरात्;— अमुतो वा नद-शरीरात्, कुतः? इति न जाने इति। अथ वा अन्यत एव 'कुतश्चिद्' अय मागतः स्यात्? इत्येतदपि तत्त्वतो न जाने। इत्येवं विलपमाना कामार्त्ता 'लोपामुद्रा' राजर्षिपुत्रिका 'वृषणं' रेतसो वर्षितारम्, अगस्त्यं 'नीरिणाति' निश्चयेनाधिकं वा दोषेण गच्छति; यदि न ममासावुपरि प्रजननं निरोत्स्यात्, ततो नायं कामो मागमिष्यत्, इत्येवं दोषेण गच्छति। "रिणाति"—इति गतिकर्मसु पठितम् ‡। अथ वा चेतसा 'नीरिणाति' उपगच्छ-

* १भा० ४०१ पृ० ६ पं०।

† "नदस्य मा रुधतः काम आगन्निह आ जातो अमुतः कुतश्चित्। लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसन्तम्॥"—इति ऋ० सं० २,४ २२,४।

‡ १ भा० १२७ पृ० १४ख० (५८)।

तीत्यर्थः ; दृष्टपुरुषानुचिन्तना हि कामार्त्तायाः स्त्रियाः स्वभाव एव। तस्मादेव मप्युपद्यते। 'धीरं' स्थिरबुद्धिं ब्रह्मचर्य्ये 'अधीरा' सङ्क्षुब्धसर्व्वेन्द्रियग्रामा 'धयति' पिबतीव चेतसा, चक्षुर्भ्यां वा पश्यति । 'श्वसन्तं' चेतसा व्यावर्त्तमानं, तस्याः सकाशात् ब्रह्मचर्य्ये कृतबुद्धिं तथापि धयत्येव । "श्वसति, नदति"—इत्येवं गतिकर्मसु पठितम् * । एवं लोपामुद्रावाक्ये "नदस्य रुधतो मा मागमत् कामः"—इति प्रकरणादृषिर्नदशब्देनोच्यत इत्युपपद्यते । "संरुद्ध-प्रजननस्य ब्रह्मचारिणः इत्यृषिपुत्र्या विलपितं वेदयन्ते"—इति निदानप्रख्यापनम् ॥ २ ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। अक्षोतेरित्येके। अनूपे गोमान् गोभि-रक्षाः सोमो दुग्धाभिरक्षाः। लोपाशः सिंहं प्रत्यञ्च मत्साः। क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके ऽनूपे गोमान् गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति सर्वे क्षियतिनिगमा इति शाकपूणिः श्वाच मिति क्षिप्रनामाशु अतनं भवति। स पतत्रीत्वरं स्था जगद्य-च्छ्वाच† मग्निरकृणोज्जातवेदाः‡ । स पतत्रि चेत्वरं स्थावरं जगमञ्च यत्तत् क्षिप्र मग्निरकरोज्जातवेदाः ।

---

* १ भा० २८० पृ० १९ख० (९); तट्टीप्पनी च द्रष्टव्या ।

† "जगद्यदिच्छाच" ख, ग ।

‡ "मग्निरचणोज्ज्ञातवेदाः" ख, ग ।

जतिरवनात्। आ त्वा रथं यथोतय इत्यपि निगमो भवति। हासमाने इत्युपरिष्टाद्व्याख्यास्यामः।* वम्रकः पड्भिरुप सर्पदिन्द्रम्। पानैरिति वा स्पाशनैरिति वा (स्पर्शनैरिति वा†)। ससं न पक्व मविदच्छुचन्तम्। स्वपन मेतन्माध्यमिकं‡ ज्योतिरनित्यदर्शनं तदिवाविदज्ज्वल्यमानम्। द्विता च सत्ता स्वधया च शम्भुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च। शम्भुः सुखभूः। मृगं न व्रा मृगयन्ते। मृग मिव व्रात्याः प्रैषाः ॥ ३ ॥

"सोमो अच्छाः(१२)"—इत्येते द्वे पदे। अत्र अच्छा इत्येतत् पदं अनवगतम्, पच्चेण चानेकार्थम्। अस्यैव च सम्बन्धादुपलक्षणार्थं सोमशब्दोऽत्र समाम्नातः। कथं नाम "न यस्य द्यावापृथिवी"—इत्येतदेवोदाहरण मत्र उपलक्षितं स्यात्? अत्र हि अच्छा इत्येष शब्दः, सोमशब्देन सम्बद्धः; यथा भूतशब्देन, मेषशब्दः—"मेषो भूतो३ भियन्नयः"—इत्यत्र§, यथा वा "अग्निर्न ये"—इत्यत्राग्निशब्दः॥। अत्र वाप्नोति-पक्षे अच्छा इति अस्य शब्दस्य सुपुष्टतर उदाहरणार्थो भवति। तस्मादय मनन्तर उपलक्ष्यते अल्पप्रयोगविषयत्वादस्य मन्त्रस्य प्रतिपत्त्यर्थं सोमशब्दः समाम्नात एकपदसमाम्नाते प्राप्ते सति॥

---

* क-ख ग-पुस्तकेष्विहैव तृतीयखण्डः समाप्तः।

† बन्धनीचिह्नान्तर्गत मेतन्न दृश्यते क-ख ग पुस्तकेषु।

‡ "स्वप्न मेतन्मध्यमम्"—इति क, ख, ग।

§ १ भा० ६२० पृ० १२ख० (८)।

‖ १ भा० २२० पृ० १२ख० (१)।

"न यस्य द्यावा० —— ० स्थिराणि" *। रेणुर्नाम विश्वामित्रस्य पुत्रः, तस्यैव मार्षम्। ऐन्द्रे सूक्ते सूर्यस्तुन्नामैकाहः, तत्रेयं निष्कैवल्यशस्त्रे निविद्धानीये शस्यते। 'न यस्य द्यावापृथिवी' न यस्य इन्द्रस्य द्यावापृथिव्यौ महिमानं 'अश्नुवाते' व्याप्नुत इत्यर्थः। 'न' 'धन्व' उदकम्; तद्धि धन्वत्यन्तरिक्षलोकात्। 'न अन्तरिक्षम्', 'न' 'अद्रयः' पर्वताः अश्नुवाते महिमानम्। किं तर्हि? सोम एवास्याः महिमान मश्नोतीत्यर्थः। कथं पुनर्गम्यते सोम एवेन्द्रस्य महिमान मश्नोतीति? इतः,—'यद् अस्य मन्युः अधि नीयमानः' यस्मादस्येन्द्रस्य मन्युः क्रोधः सोमेन पीतेन सता मदसामर्थ्यादुपरि शत्रूणां नीयमानः प्राप्यमाणः शृणाति। 'वीळु'। यदपि 'वीळु' दृढं सन्नद्धं शत्रुबलं भवति, तदपि शृणात्येव, हिनस्तीत्यर्थः। 'रुजति' च 'स्थिराणि' अपि दृढानि मेघवृन्दानि भिनत्तीत्यर्थः। एवं सेतस्मिन् मन्त्रे व्याप्त्यर्थस्य "अश्नोतेः" अक्षा इत्येष शब्दो निरुच्यते "इत्येव मेके" मन्त्रार्थविदो मन्यन्ते॥

"अनूपे गोमान्० —— ० तोशते" †। सप्तर्षीणा मार्षम्। बृहती। पावमानी सौमी। 'अनूपे' देशे 'गोमान्' गोभिः सहितो यदा 'अक्षाः' क्षियति, निवसति; अथ तदा सुयवसत्वात् तस्य देशस्य 'सोमो दुग्धाभिः' पुनः पुनः दुग्धाभ्योऽपि गोभ्यः क्षरत्येव। कथं पुनः क्षरति? इति। उच्यते,— 'समुद्रं न संवरणानि' समुद्र मिव

* "न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः। यदस्य मन्युरधि नीयमानः शृणाति वीळु रुजति स्थिराणि॥" इति ऋ० सं० ८,४,१५,१।

† "अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः। समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते॥"—इति ऋ० सं० ७, ५, १२, ४।

संवरणान्युदकानि; उदकानि हि देशान्तरात् संवृण्वन्ति, तानि यथा सर्वेभ्यो देशेभ्यः संहृत्य समुद्र माभिमुख्येन 'अग्मन्' गच्छन्ति, एवं दुग्धाभ्यः सोमः सर्वेभ्यो गात्रेभ्यः संहृत्य ऊधः प्रति चरति मदायेन्द्रस्य। अथ यदैवं प्रचरति, तेन सोमेनामावास्यायां सान्नाय्येन तृप्त इन्द्रो 'मन्दी' हर्षशीलः, यजमानस्य शत्रून् 'तोषते' हिनस्तीत्यर्थः। "नितोषयति, निवर्हयति"—इति हन्तिकर्मसु पठितम् *। एव मेतस्मिन् मन्त्रे "चियति-निगमः पूर्वः"—"अनूपे गोमान् गोभिरक्षाः"—इत्येषः (२०पृ०२०पं०) "चरति-निगमः उत्तरः"—"सोमो दुग्धाभिरक्षाः"—इत्यत्र (२०पृ०२०पं०)। एवम् "एके" मन्त्रार्थविदो मन्यन्ते। तच्च तथैवोपव्याख्यातम्। "सर्वे" एवैते त्रयोऽपि "चियतिनिगमाः" "इति" "शाकपूणिः" आचार्यो मन्यते। न यस्य द्यावापृथिव्यौ निवासः, न धन्व, न अन्तरिक्षं निवासः; किं तर्हि? सोम एव इन्द्रस्य निवासः। तस्य सोमस्य किम्? इति उच्यते,— यदस्य मन्यूरधि शत्रूणां नीयमानः, शृणाति वीलु रुजति स्थिराणि। समान मन्यत् पूर्वेणैवार्थेन। "अनूपे गोमान् गोभि रक्षाः"—इत्यत्र निवासार्थतैव पुर्वस्मिन्नेवार्थे। अथ सोमो दुग्धास्वपि गोषूधः निवसति, न निर्दुग्धाः कर्त्तुं शक्यन्ते इत्यभिप्रायः। एव मेते सर्वे त्रयोऽपि "चियति-निगमाः"—इति "शाकपूणिः" आचार्यो मन्यते॥

"स्वात्रम्[१४]"—इति† एतदनवगतम्। "आशु अनतं

* १ भा० २८१ पृ० १९ख० (२९), (३०)। तद्दीपनी च द्रष्टव्या।
† १भा० ४०७ पृ० १९पं।

भवति"—इति शब्दसमाधिः। "चिप्र नाम"—इत्यभिधेयवचनम्। "यो होतासीत् ०—० जातवेदाः"*। इयं हविष्पाङ्क्तीये सूक्ते। तत् पुनर्मूर्द्धन्वताङ्गिरसेन दृष्टम्; वामदेव्येन वा। पृष्ठ्यस्य पञ्चमेऽहनि आग्निमारुते शस्त्रे निविद्धानीयं तद्भवति। 'यः' अग्निः 'होतासीत्' आहोता देवानाम्, 'प्रथमः' प्रधानः, मनुष्यहोतुः सकाशात्। 'देवजुष्टः' देवैरासेवितः। 'यं' 'समाञ्जन्' समुचितवन्तः। केन? 'आज्येन' 'आवृणानाः' सेवमानाः, भजमाना इत्यर्थः। तस्य किम्? इति। उच्यते;—'सः पतत्रीत्वरम्' सोऽग्निः पतत्रिः, यदेतदितश्चेतश्च पतति; इत्वरञ्च पव्यादि, 'स्था' स्थावरञ्च वृक्षादि, 'जगत्' यदेतज्जङ्गमादि। तस्य किम्? इति। उच्यते;— तत् सर्वं प्रलयकाले 'श्वात्रं' चिप्र मात्मसाद् 'अकृणोत्' "अकरोत्" 'जातवेदाः' अग्निः। एव मेतस्मिन् मन्त्रे "श्वात्र मिति" इत्येतत् "चिप्रनाम"। पतत्रि-स्थावर-जङ्गमानां चिप्रदहनादग्निः किमन्यत् कुर्यात्? तस्मादुपपद्यते चिप्रनामेति॥

"ऊतिः(१५)"—इति † अनवगतम्। "अवनम्"—इत्यर्थप्रतीतिः। "अवनाद्" रक्षणादित्यर्थः। आ त्वा रथं यथो ०—० सत्पते" ‡। प्रियमेधस्यार्षम्। हे इन्द्र! 'त्वा' त्वाम् 'आ वर्त्तयामसि' आवर्त्तयामहे। किमर्थम्? 'ऊतये' अस्माकं रक्षणाय, 'सुम्नाय' सुखाय

* "यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येनावृणानाः। स पतत्रीत्वरं स्था जगद्यच्छ्वात्र मग्निरकृणोज्जातवेदाः॥"—इति ऋ० सं० ८, ४, १०, ४।

† १ भा० ४०८ पृ० ९ पं०।

‡ "आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि। तुविकूर्मिं ऋतीषह मिन्द्र शविष्ठ सत्पते॥"—इति ऋ० सं० ६, ५, १, १।

च। कथं पुनरावर्त्तयामहे? इति उच्यते,—'रथं यथा' यथा हि कश्चिद् यथा रथ मावर्त्तयेत्, एव मावर्त्तयामहे वयं त्वां स्तुतिभिः। किंलक्षणं पुनर्भवन्त मावर्त्तयामहे? उच्यते;—'तुविकूर्मिम्' बहूना मनेकप्रकाराणां कर्मणां कर्त्तारम्। 'ऋतीषहम्' च, आर्त्तीना मभिभवितारम्। हे 'इन्द्र!' 'शविष्ठ' बलिष्ठ! 'सत्पते' सतां पते!। एव मावर्त्तनेनैकवाक्याभिसम्बन्धेन "ऊति"-शब्दो रक्षणार्थ इत्युपपद्यते॥

"ह्रासमाने[१६]"—इति *। "उपरिष्टाद् व्याख्यास्यामः"; "प्र पर्वताना मुशती उपस्थात्"—इत्यत्र†॥

"पड्भिः[१७]"—इति‡ अनवगतम्। "पानैरिति वा स्पर्शनैरिति वा"—इति शब्दसमाधी। "एवा महो असुर०—० विश्व माभाः"§। वम्रो नाम वैखानसः, तस्येय मार्षम्। ऐन्द्री। य एष एतस्मिन् सूक्ते स्तुतिप्रकारोऽधिकृतः 'एवा' एवम् अनेन प्रकारेण वर्त्तमान! हे इन्द्र! 'असुर' असुमन्! प्रज्ञानवन्! बलवन्! वा 'वक्षथाय' स्तुतिवक्त्रे, महते यजमानाय, पूर्वकल्पान्तरीणाय; पूर्वकल्पान्तरीण एव 'वम्रकः', 'पड्भिः' सोमपानैरभ्युदितैः, अथ वा गुणस्पर्शनैः स्तुतिगतैः, 'उपसर्पत्' उपसृप्तवान्, अन्यकल्पान्तरीणम् 'इन्द्रम्'। 'सः' तेन तथा 'इयानः' ईयमानः, अनुस्तियमाणः 'करति' कृतवान्। किम्? 'स्वस्तिम्' स्वस्त्ययनम्। 'अस्मै' यज-

* १ भा० ४०८ पृ० ५ पं०।

† प० दै० का० ९, ४, ५।

‡ १ भा० ४०८ पृ० ८ पं०।

§ "एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम्। स इयानः करति स्वस्तिमस्मा इष मूर्जं सुक्षितिं विश्व माभाः॥"—ऋ० सं० ८, ५, १५, ९।

"बतो बतासि०——०वृक्षम्" *। यमी, यमं ब्रवीति,—"दुर्बलः" 'बत' दुर्बलहृदयः त्वम्, अधर्मभीरुर्मोहमयस्त्वम्। एव मसकृन्मया प्रार्थ्यमानः खेद मुप यासि,—नेच्छसि मया सम्भोक्तुं स त्वं सर्वथा ह्यनुकम्प्यः, शोच्य इत्यर्थः। अथ वा 'नैव' 'ते' तव 'मनः' सङ्कल्पम्, 'हृदयं' हृद्गत मध्यवसायञ्च 'विजानीमः'। अथ वा लब्धस्ते मयाभिप्रायः;—'अन्या किल त्वां' मत्तो विशिष्टतरा योषित्, 'परिष्वजाते' "परिष्वङ्क्ष्यते" †; ततः 'किल' त्वं मां तयापहृतचेतस्त्वात् नेच्छसि परिष्वक्तुम्। कथञ्च पुनरन्या त्वां परिष्वङ्क्ष्यते ‡? 'कक्ष्येव युक्तम्', 'लिबुजेव वृक्षम्'। 'कक्ष्या' कक्षजाता 'इव' सुबद्धा, 'लिबुजा' वल्ली, यथा 'युक्तम्' आत्मना संयुक्तम् समीपजं परिष्वजेत् परिवेष्टयेत, एवं किल त्वा मन्या परिष्वङ्क्ष्यते इति॥ एव मत्र प्रकरणाविरोधात् 'बत'—इत्येष निपातः खेदानुकम्पयोः॥ अत्र 'कक्ष्येव युक्तम्'—'लिबुजेव वृक्षम्'—(इत्येकः 'इव'-शब्दोऽनर्थकः; अथ वोपमानद्वय मेव स्यात्,—कक्ष्येव च, लिबुजेव च §,—) यथा कक्ष्या च लिबुजा च परिष्वजनीयौ अश्वत्थवृक्षौ परिष्वजेते, एवं परिष्वङ्क्ष्यते इति॥

"वाताप्यम्(११२)"—इति ‖, अनवगतम्। "उदकं भवति"—इत्यभिधेयवचनम्। "वातः" हि "एतत्" उदकम् "आप्याययति" शीतं करोति। अथ वा आप्यायतिर्वृद्ध्यर्थः स्यात्; पुरो

* ऋ० सं० ७, ६, ८, ३।
†,‡ उभयत्रैव "परिष्वञ्यते" क।
§ नास्त्येष पाठः क-पुस्तके।
‖ १भा० ४५३ पृ० ९पं०।

वातेन हि वृष्टिभूत मुदकं संवर्द्धते। "नू नो रयिं०——०वसुर्जगम्यात्" *। नोधसो गौतमस्यार्षम्। पावमानी सौमी। हे सोम! 'नु नः' क्षिप्र मस्माकम् 'रयिम्' धनम् 'उपमास्व' उपनिर्मिणुहि। 'नृवन्तं' पुत्रपौत्रैः सहितम्। 'पुनानः' पूयमानः। 'वाताप्यम्' उदकं प्राप्य द्रवीभूतः। 'चन्द्रं' चायनीय मुदकम्। 'विश्वः' च सर्वः पूयमानः। किञ्च; 'प्रतारि' प्रतीर्णं दीर्घं कुरु—हे 'इन्दो' सोम! 'वन्दितुः' स्तोतुः 'आयुः'। किञ्च; तथा उपमास्व, यथा 'प्रातः' नित्य मेव 'धियावसुः' कर्मवसुः। इन्द्रः त्वां पातु मस्माकम् 'आ जगम्यात्' आगच्छेदित्यर्थः॥ एव मत्र "वाताप्यम् = उदकम्" अर्थाविरोधाच्छब्दोपपत्तेश्च॥

"चाकन्(११४)"—इति †, अनवगतम्। "चायन्"—इति, "कामयमानः"—इति शब्दसमाधौ॥ "वने न वायो०——०तमः क्षपावान्" ‡। वसुक्रस्येय मार्षम्। ऐन्द्री। त्रिष्टुप्। 'वने न' "वने इव" (वृक्षे इव §)। शकुनिः, स्वे नीडे वाय मात्मीयं पुत्रं 'न्यधायि' निदधाति 'शिशुकम्' अजातपक्षम्। स यथा तत्र निहितः 'चाकन्' "चायन्" पश्यन्, भयाद् दिशो निरीक्षमाणः आसीत्; अथ वा "कामयमानः" तदुत्सुकमना आसीत्॥ एव मय मस्मासु वृतस्य नीडभूतेषु शकुनि-

---

* "नू नो रयिं सुपमास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्। प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात्॥"—इति ऋ० सं० ७, ४, २, ५।

† १भा० ४५५ पृ० १५ पं०।

‡ "वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः। यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्॥"—इति ऋ० सं० ७, ७, २२, १।

§ न दृश्यते इदं पदं क-पुस्तके।

पुत्रभूतः, ‘शुचिः’ व्यपगतसर्वदोषः युवयोः स्वभूतः, ‘स्तोमः’। हे ‘भुरण्यौ’ भर्त्तारौ अश्विनौ! शीघ्रौ वा; भुरण्युरिति चिप्रनामेति *। किञ्च; यस्य स्तोमस्य ‘पुरुदिनेषु’ बहुष्वहःसु ‘इन्द्रो होता’ इन्द्रोऽप्याह्वाता भवति,–ममायं स्तोमः स्यादिति। किंलक्षणः पुनरिन्द्र आह्वाता? यः ‘नृणां नृतमः’ मनुष्याणा मपि मनुष्यतमः, शूराणा मपि मध्ये शूरतम इत्यर्थ। ‘नर्यः’ च नृभ्यो हितः, यः ‘क्षपावान्’ च रात्रिपर्यायेषु सोमभागी। एवङ्गुणयुक्तेन यः स्तोम इन्द्रेणापि प्रार्थ्यते, अस्मासु वर्त्तमानः, स युवां प्रति ‘अजीगः’ नित्यकाल मेव गच्छतीत्यर्थः॥

एवन्तावदेता मृच माश्विनी मिति कृत्वा व्याचक्षते, तदसाधु; ऐन्द्रे हि सूक्ते प्रथमैवेय मृग् भवति †। तच्च पुनः पृष्ठ्यस्य षष्ठेऽहनि स्तोमे वर्द्धमाने माध्यन्दिने सवने ब्राह्मणाच्छंसिनः शस्त्रे विनियुज्यते ‡। हे ‘भुरण्यौ’ भर्त्तारौ, देवतानाम् पती! य एषः स्तोमोऽस्मासु निहितः, ‘शुचिः’ व्यपगतदोषः, शकुनिपुत्र इव, ‘वने’ वनावयवे वृक्षे, ‘चाकन्’ पश्यन्निव कामयमान इव वा इन्द्रम् आस्ते। यः स्तोमः, तस्य किम्? इति,–यस्येन्द्रः पुरुदिनेषु बहुष्वहःसु आह्वाता अभूत्; अपि नाम मा मनेन स्तोमेन स्तुयुरिति। किंलक्षणः पुनराह्वाता यस्येन्द्रः? इति,—नृणां नृतमः नर्यश्च क्षपावांश्च। समान मेतत् पूर्वेणैवार्थेन। य मेव मिन्द्रः प्रार्थयते, स एषः

---

* १आ० २५७ पृ० ९ख० १५ ख० (१४); २९१ पृ० ९पं।

† “वनेनवेत्यष्टर्चं चयोदशं सूक्तम्, वसुक्रस्यार्षं चैष्टुभ मैन्द्रम्, अनुक्रान्तश्च वनेनाष्टाविति।”—इति तत्रैव सा० भा०।

‡ “स्तोमे वर्द्धमाने को अद्य नर्यो वने न वायः”—इति आ० ७. ११।

स्तोमः, तं प्रत्यजीगः, गच्छतीत्यर्थः। अथ वा स एषः स्तोमो-ऽस्माभिरुदीर्यमाणः, तस्येन्द्रस्य गुणान् गृह्णातीति स्यात्; "जिगर्त्तिः० ——०गृह्णातिकर्मा वा"—इति ह्युक्तम् *॥ एव मत्र 'चाकन्'—इत्यस्य "चायन्"—इति, "कामयमानः—इति वा"—इत्येतौ विपरिणामावुपपद्येते, शब्दसारूप्यादर्थाविरोधाच्च॥

एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, त माह भाष्यकारः,—"वा—इति च, यः—इति च, चकार शाकल्यः"—इति। शाकल्यः पदकारः। तदेतद् विचार्यमाणं न साधु भवति, किङ्कारणम्? "उदात्तं त्वेव माख्यात मभविष्यत्"। 'एवम्' एतस्मिन् पदद्वये सति, यदेतत् 'आख्यातं' न्यधायीति, एतत् 'उदात्तम् अभविष्यत्'; यद्वृत्तात्परस्य नित्य माख्यातस्य निघातो न भवतीति लक्षणविदो मन्यन्ते†, न चेद मुदात्तम्; तस्मात् 'यः'-इति नेदं यद्वृत्तम्। किन्तर्हि? 'वायः'—इति एकं पदम्। किञ्च; "असुसमाप्तश्चार्थः" अपुष्कलः; एव मेतस्मिन् पदद्वये सति मन्त्रस्यार्थो ऽसुसमाप्तो भवति। कथम्? द्विपदत्वे हि सति 'वा'-शब्दस्यार्थेन केन चिद् भवितव्यम्, न चेह विकल्पः समुच्चयो वा कश्चिदर्थोऽस्ति। तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे, 'वायः'-इत्येतदेकपद मेव; "शकुनिपुत्रः" एव चास्याभिधेयः उपपद्यते॥

---

* पृ० १७४ पं० १७१।

† लक्षणविदः, पाणिन्यादिव्याकरणलक्षणवेत्तार इति यावत्। तथा च सूत्रम्,—"यद्वृत्तान्नित्यम्"—इति पा० ८, १, ६६।

"रथर्यति(११५)"—इति *, अनवगतम्। 'रथं इर्यति'—इत्यवगमः; इर्यति-शब्दोहि प्रेप्सायाम्; "रथं" हि यः "कामयते", स रथर्यति। "एष देवो॰——॰वग्वनुम्" †। शुनःशेपस्यार्षम्। पावमानी सौमी। गायत्री। ग्रावस्तुत आवापे। 'एषः' सोमो 'देवः' 'रथर्यति' रंहण मात्मनो गमन मिच्छति। 'पवमानः' 'दशस्यति' दान मात्मन इच्छति; कथं नाम मां देवेभ्यो दद्युरिति। किञ्च; 'आविष्कृणोति' प्रकाशीकरोति 'वग्वनुम्' वचो वननीयम्, दत्त मां देवेभ्य इति॥ एव मत्र "रथर्यति = रथप्रेप्सुः" शब्दसारूप्यादेतदुपपद्यते॥ (२८‡)

"असश्चाम्(११६)"—इति §, अनवगतम्। "असङ्क्रमणीम्"—इति शब्दसमाधिः। "पुरु हि वां॰——॰राति मग्मन्" ‖। भरद्वाजस्यार्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। 'पुरु' बहु 'देष्णं' दानं 'वां' युवाभ्यां यज्ञे यस्मात् हे 'पुरुभुजौ' बहुभोजिनौ! अश्विनौ! तस्मात् युवां ब्रूमः,—'धेनुं नः' तर्पयित्री मस्मभ्यम् 'इषम्' अन्नलक्षणम् 'पिन्वन्तम्' प्रक्षारयन्तम्, 'असश्चाम्' असङ्क्रमणशीलाम् अनपायिनीम् अस्मत्तः; अथ वा असङ्क्रमणशीलां

---

* १भा० ४५४ पृ० १पं।

† "एष देवो रथर्यति पवमानो दशस्यति। आविष्कृणोति वग्वनुम्॥"—इति ऋ० सं० ६, ७, २०, ५।

‡ अत्रैव पञ्चमखण्डसमाप्तिः पादसमाप्तिश्च इत्तिसम्मता परं मूलविरुद्धेति कृत्वानादरणीयेत्यस्माकम्। अष्टाविंशखण्डसमाप्तिस्तु ङ-च-पुस्तकानुरुद्धैव परं न तत्रापि पाद व्यवस्थेति।

§ १भा० ४५४ पृ० ४पं०।

‖ पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वत मसश्चाम्। स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वा मनु राति मग्मन्॥"—इति ऋ० सं० ५, १, ४, २।

द्याम्, 'इषम्' इड्-हेतूदक मस्मदर्थं प्रचारयत मिति स्यात्। किम्पुनः तद् युवयोर्बङ्गदानम्? इति,—'सुतश्च' सुत-शस्त्रवांश्च सोमो युवयोरन्नम्। हे 'माध्वी' मधुपौ! 'सुष्टुतिश्च' शोभनाभिः स्तुतिभिः सुष्टु स्तुतः, 'रसाश्च' आज्यादयः, य एते 'राति' पुरोडाशस्यानुगच्छति, सर्व एते युवयोरेव। तस्माद् ब्रवीमि,—पिन्वत मिति॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च 'असक्रम्'—इत्यस्य शब्दस्य "असक्रमणीम्"—इत्येष विपरिणाम उपपद्यते। इडभिधेया, द्यौर्वा॥ ५ *॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य)
पञ्चमः पादः॥ ६, ५॥

---

॥ षष्ठः पादः॥

**आधवं आधवनात्। मतीनां च साधनं विप्राणां चाधव मित्यपि निगमो भवत्यनवब्रवोऽनवक्षिप्तवचनः। विजेषकृदिन्द्र इवानवब्रव इत्यपि निगमो भवति॥ १ (२९)॥**

"आधवः(११०)"—इति † अनवगतम्। "आधवनात्"—इत्यवगमः; आकम्पनादित्यर्थः। "मंसीमहि०——०चाधवम्"। ऐन्द्रस्य

---

* पादान्वितमूलपुस्तकानुरोधत एवेह पञ्चमखण्डसमाप्तिः पञ्चमपादसमाप्तिश्च स्वीक्रियतेऽस्माभिः, वृत्तौ त्वितः प्रागेव।

† १भा० ४५४ पृ० ११पं०।

‡ "मंसीमहि त्वा वयमस्माकं देव पूषन्। मतीनां च साधनं विप्राणां चाधवम्॥"—इति ऋ० सं० ७, ७, १२, ४।

विमदस्यार्षम् । अनुष्टुप् । पौष्णी । 'मंसीमहि' त्वां हे 'पूषन्'! 'देव!' 'मतीनां' च प्रज्ञाना मस्माकं साधयितारम्; आदित्येन हि प्राणिनां प्रज्ञा अभिव्यज्यन्ते। किञ्च; ये चान्ये 'विप्राः' प्राप्तप्रज्ञाः मेधाविनः, तेषाम् 'आधवम्' आकम्पयितारं त्वय मेव । तथा त्व मात्मनो गुणवत्तां दर्शयसि, यथा प्रोत्कम्पमानहृदयास्ते त्वां स्तुवते॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च "आधवः = आकम्पयिता"—इत्युपपद्यते ॥

"अनवब्रवः(११८)—इति *, अनवगतम् । "अनवच्छिन्नवचनः"—इति अवगमः । "विजेषकृदिन्द्र ——॰यत आ बभूथ" † । मन्योरार्षम् । त्रिष्टुप् । मान्यवे सूक्ते । श्येनादिषु निष्केवल्ये शस्यते । 'विजेषकृत्' विजयकृत्, 'इन्द्रः इव अनवब्रवः' इन्द्र इवानवच्छिन्नवचनः; न हीन्द्रस्य केनचिदाच्छिद्यते वचः । हे 'मन्यो!' यस्त्वम् अनवच्छिन्न-वचनः इन्द्र इव, स त्व मस्माकम् 'अधिपाः' अधिष्ठाय पाता 'भव' । किञ्च; हे 'सहुरे' शत्रूणां सहनशील! 'प्रियं ते' यत् 'नाम', तेन त्वां 'गृणीमसि' नित्य मेव स्तुम इत्यर्थः । किञ्च; 'विद्म' जानीमो वयम् 'तम्' 'उत्सम्' उत्स्यन्दनम्, 'यतः' त्वम् 'आ बभूथ' ॥ एव मत्र शब्दसारूप्यादर्थाविरोधाच्च "अनवब्रवः = अनवच्छिन्नवचनः"—इत्युपपद्यते ॥ १ (२९) ॥

---

* १भा० ४५४ पृ० १४ पं० ।

† "विजेषकृदिन्द्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह । प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आ बभूथ ॥"—इति ऋ० सं० ८, ३, १९, ५ ।

अरायि काणे विकटे गिरिं गच्छ सदान्वे। शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥ अदायिनि काणे विकटे काणो*ऽ(?) विक्रान्तदर्शन इत्यौपमन्यवः कणतेर्वा स्यादणूभावकर्म्मणः कणतिः शब्दाणूभावे† भाष्यतेऽनुकणतीति मात्राणूभावात्कणो‡ दर्शनाणूभावात्काणो विकटो विक्रान्तगतिरित्यौपमन्यवः कुटतेर्वा स्याद् (विपरीतस्य§) विकुटितो भवति गिरिं गच्छ सदानोनुवे शब्दकारिके। शिरिम्बिठस्य सत्वभिः। शिरिम्बिठो मेघः शीर्यते बिठे (बिठ मन्तरिक्षम्॥) बिठं बीरिटेन व्याख्यातं तस्य सत्त्वैरुदकैरिति स्यात्तैष्ट्वा चातयामोऽपि वा शिरिम्बिठो भारद्वाजः कालकर्णोपेतोऽलक्ष्मीर्न्निर्णाशयाञ्चकार तस्य सत्त्वैः कर्म्मभिरिति स्यात्तैष्ट्वा चातयामश्चातयतिर्न्नाशने पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवतीन्द्रोऽपि पराशर उच्यते (परा¶) शातयिता यातूनाम्। इन्द्रो यातूना मभवत्पराशर इत्यपि निगमो भवति। क्रिविर्दती विकर्त्तनदन्ती। यत्रा

---

* "काणे" ङ।

† "शब्दानूभावे" क, ख, ग।

‡ "मात्राणूभावात्काणो", ङ, "मात्राणूभावात्कणा" च।

§, ‖, ¶ नैतानि दृश्यन्ते क-ख-ग-पुस्तकेषु।

वो दिद्युद्रदति क्रिविर्दतीत्यपि निगमो भवति। करूलती कृत्तदती* (अपि वा देवं कञ्चित् कृत्तदन्तं दृष्ट्वैव मवक्ष्यत् †)॥ २(३०)॥

"सदान्वे(११९)"—इति ‡, अनवगतम्। "सदानोनुवे"—इति शब्दसमाधिः। "अरायि काणे ०——०चातयामसि" §। शिरिम्बिठस्य भारद्वाजस्य आर्षम्। अनुष्टुप्। दुर्भिक्षाधिदेवतोच्यते, कालकर्णी वा अलक्ष्मीः ‖। हे 'अरायि' "अदायिनि!" दुर्भिक्षाधिदेवते! अथ वा हे अलक्ष्मि! दुर्भिक्षेण पीड़ितानां न दाने मतिः प्रवभति,नाप्यलक्ष्म्याभिभूतानाम्। 'काणे' दुर्भिक्षेण ह्यभिभूतानां मान्द्यं चक्षुषोर्भवति, अन्नाभावात्; अलक्ष्मीपक्षेऽपि तद्रूपा अलक्ष्मीरिति प्रतीयते; लोकेऽपि च या विरूपा भवति, अलक्ष्मीरिति सोच्यते। 'विकटे' दुर्भिक्षे दुर्बलत्वात् विकटैव प्राणिनां गतिर्भवति; अलक्ष्मीरपि तद्रूपा। 'गिरिं गच्छ' माचावस्थानं कार्षीः। 'सदान्वे' "सदानोनुवे शब्दकारिके"; दुर्भिक्षे हि क्षुत्पीडिताः प्राणिनो निश्वसन्तः सदैव शब्दं कुर्वन्ति; अलक्ष्मीरपि तद्रूपा,-पिशाचादीनि नित्य मव्यक्तं शब्दं कुर्वन्ति;—पिशाचाद्या हि शृणु नसुनायन्तस्येति लोके वक्तारो भवन्ति, एतत् प्रसिद्धम्। 'शिरिम्बिठस्य' मेघस्य स्वभूतैः 'सत्वभिः' "उदकैः"; "सत्वम्"—इति ह्युदकनामसु पठि-

---

* "करूलती कृत्तदती" ग।

† नास्त्येष पाठः क ख-ग-पुस्तकेषु।

‡ १भा० ४५५पृ० १पं०।

§ ऋ० सं० ८, ८, १३, १।

‖ "अरायि शिरिम्बिठो भारद्वाजोऽलक्ष्मीघ्नम्।"—इत्यनुक्रमणी।

नाश्यते। "अपि वा शिरिम्बिठो भारद्वाजः", "तस्य सत्त्वैः नामभिः" *, तेन यानि दृष्टानि नामानि, सम्भवनसमर्थानि, स्तुतिसंयुक्तानि, तैर्वयं त्वां नाशयामः॥ एव मत्र शब्दार्थाविरोधात् "सदान्वे"—इत्यस्य "सदानोनुवे"—इत्येष विपरिणाम उपपद्यते॥

निगमप्रसक्तान्यधुनोच्यन्ते;—"राति, रासति"—इति दानकर्मसु पठितः †, तस्य प्रतिषेधपूर्वस्य 'अ-राधि'—इति भवति। "कणतिः, शब्दाणूभावे भाष्यते,—अनुकणतीति"; "मात्राणूभावात्" "कणः" श्यामाकादिः, तत्सामान्यात् "दर्शनाणूभावात्" "काणः"। अथ वा "काणः = विक्रान्तदर्शनः"—"इत्यौपमन्यवः"; विक्रान्तं हि तस्य दर्शनं भवति, एकीभूतत्वात्। "काणः = अविक्रान्तदर्शनः"—इति वा, मन्दचक्षुष्ट्वात्। "विकटः = विक्रान्तगतिः" विकृतगतिरित्यर्थः ‡। अथ "वा" "कुटतेः" धातोः "स्यात्"; असौ हि "विकुटितो भवति", कुत्सीभूत इत्यर्थः। "विठम्"—इत्यपठित मन्तरिक्षनामसु, तत् पुनरेतत् "वीरिटेन व्याख्यातम्"; अत्र ह्युक्तम्,—"वीरिटं मन्तरिक्षम्, भियो वा भासो वा ततिः" §। तस्मिन् "बिठे" यः "शीर्यते", सः "शिरिम्बिठो(१२०) मेघः" ‖। "अपि वा शिरिम्बिठो भारद्वाजः", सोऽनेन सूक्तेन "अलक्ष्मीः निर्नाशयाञ्चकार"—इति निदान मन्वाख्या-

---

* "तस्य सत्त्वैः कर्मभिः"—इत्येव पाठोऽस्मद्दृष्टेषु रोथ्दृष्टेषु च सर्वमूलपुस्तकेषु। सायणेनाप्येव सेव पाठ उद्धृतः ऋग्भाष्ये।

† १भा० २५५पृ० ३अ० २० ख० (४, ५)।

‡ "विकटः = विक्रान्तगतिरित्यर्थः" क।

§ पु० १२२ पृ० १९ पं०।

‖ १भा० ४५५ पृ० ४पं०।

तम् *। अद्यापि योऽलक्ष्म्याभिभूतो भवति, स आर्द्रः उदकेऽवतीर्य सूक्तमेतज्जपति, तस्मालक्ष्मीर्निर्नश्यति †॥

"पराशरः(१२१)"—इति‡, अनवगत मनेकार्थञ्च। "पराशीर्णः"—इत्यवगमः। "प्र ये गृहाद०——०व्युच्छान्"§। वसिष्ठस्यार्षम्। ऐन्द्रे सूक्ते त्रिष्टुप्। प्रकर्षेण 'ये' 'अममदुः' तृप्तवन्तः सोमेन, हृष्टवन्तो वा यज्ञेषु। हे इन्द्र! 'त्वाया' त्वया सह 'पराशरः' च 'शतयातुः' बहूनां रक्षसां यातयिता; तेन हि रक्षोघ्नं सत्र माहृत मासीदिति भारते श्रूयते। 'वसिष्ठः' च इत्येवमादयः। किं तेषाम्? इति,—'न' 'ते भोजस्य' भोगिनः तव 'सख्यं' सखिभावं 'मृषन्त' मार्जयन्ते नाशयन्तीत्यर्थः। 'अधा' अथैवङ्गुणयुक्तेभ्यस्तेभ्यः 'सूरिभ्यः', 'सुदिना' शोभनानि दिनानि 'व्युच्छान्' विभान्तीत्यर्थः। तेषा मेव सुप्रभाता रात्रयः इत्यभिप्रायः। एत मत्र "ऋषिः = पराशरः" वसिष्ठसम्बन्धात्॥

"इन्द्रोऽपि पराशर उच्यते"; स हि "परा" परितः "शातयिता" "यातूनां" यातयितव्यानाम्, असुरादीना मिति। "इन्द्रो यातूना मभवत् पराशरः"—इति‖। व्याख्यातः शेषः¶॥

"क्रिविर्दती(१२२)"—इति**, अनवगतम्। "विकर्त्तनदन्ती"—

---

* "निदानं व्याख्यातम्" क।

† "जपहोमादिभिरिदं सूक्तं मश्रीनाशकरम्"—इति सा० भा०।

‡ १भा० ४५५ पृ० ६ पं०।

§ "प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः। न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान्॥"—इति ऋ० सं० ५, २, २८, १।

‖ ऋ० सं० ५, ७, ९, १।

¶ २भा० ३५० पृ० १२ पं०।

** १भा० ४५५ पृ० १२ पं०।

इत्यवगतमः। "यूयं न उग्रा०——०बर्हणा"*। अगस्त्यस्यार्षम्। जगती। हे 'मरुतः!' 'उग्राः' उद्गूर्णाः, 'अरिष्टग्रामाः' अनुपहिंसित-सङ्घाताः यूयम्, अस्माकं 'सुचेतुना' शोभनेन प्रज्ञानेन, एतां 'सुमतिं' शोभनां मतिम् 'पिपर्त्तन' पूरयत पालयत वा। केन पुनः पूरयत? कुतो वा पूरयत? इति,—"यत्रा वो दिद्युत्"। 'यत्र' यस्मिन् मेघे 'दिद्युत्' आयुधं क्षिप्तं युष्माभिः, त मेव मेघं 'रदति' विलिखति, विदारयति वर्षार्थम्। किंलक्षणा पुनर्दिद्युत्? इति,—'क्रिविर्दती' विकर्त्तनसमर्थैः दन्तैः या रदति। कथम्पुनर्या रदति? "रिणाति पश्वः सुधितेव" इति। यथा 'पश्वः' पशोः अङ्गानि 'रिणाति' पृथक् करोति, 'सुधिता' खधित्या, 'बर्हणा' परिवृद्धया हिंसया, एव मस्मिन् मेघे दिद्युदः ता रदन्ति। ततः प्रभ्रष्टेनोदकेन सुमति मस्माकं पिपर्त्तन॥ एव मचार्थाविरोधादायुधं 'क्रिविर्दती'-शब्देनोच्यत इत्युपपद्यते॥

"करूळती[१२२]"—इति †, अनवगतम्। "कृत्तदती"—इत्यवगमः॥ २ (३०)॥

वामंवामं त आदुरे देवो ददात्वर्यमा। वामं पूषा वामं भगो वामं देवः करूळती॥ वामं वननीयं भवत्यादुरिरादरणात्तत्कः करूलती भगः पुरस्तात्तस्यान्वादेश इत्येकं पूषेत्यपरं सोऽदन्तकोऽदन्तकः पूषेति च

---

* "यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्त्तन। यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा॥"—इति ऋ० सं० १, ४, १, १।

† १भा० ४५५ पृ० १० पं०।

ब्राह्मणम् । दनो विश इन्द्र मृध्रवाचः दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु । अवीरामिव मा मयं शरारुरभि मन्यते । अबलामिव मा मयं बालोऽभिमन्यते संशिशरिषुरिदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते । वसूयुरिन्द्रो वसुमानित्यत्रार्थः । अश्वयुर्गव्यूरथयुर्वसूयुरित्यपि* निगमो भवति ॥ ३ (३१) ॥

"वामंवामं त०——०देवः करूळती" † । वामदेवस्यार्षम् । ऐन्द्रे सूक्ते । अनुष्टुप् । रात्रिपर्याये प्रशास्तुः शस्त्रे विनियुक्ता । 'वामं वामम्'—इति भूयस्त्वार्थोऽभ्यासः; "अभ्यासे भूयांसमर्थं मन्यन्ते"—इति हि वक्ष्यति । यद्यत् सुष्ठु "वननीयम्" इष्टम्, 'ते' तव धनम्, तत्तत् हे 'आदुरे' आदरवन्! यजमान! स हि यागं प्रति नित्यम् आदृतो भवतीत्यत एवं सम्बोध्यते—हे आदुरे! । 'वामं ददात्वर्यमा' । यदर्यम्णो 'वामं' "वननीयम्" इष्टम्, आत्मनो धनम्, तत् असौ तुभ्यं 'ददातु' । किञ्च; 'वामं पूषा' ददातु । 'वामं भगः' ददातु । 'वामं देवः करूळती' ददात्वित्येतदेवानुवर्त्तते । 'करूळती'—इत्येतद् गुणपदत्वात् सन्दिह्यते, "तत्" एतत् विचार्यते—"कः करूळती?"—इति । "भगः पुरस्तात्" 'करूळती'-शब्दस्य । "तस्य" एवायम् "अन्वादेशः" सन्निधानसामर्थ्यात् ।—"इत्येकम्" आचार्यमतम् । "पूषा—इति अपरम्" ।

---

* "रथयुर्वस्वयुरिन्द्र इत्यपि" ङ, च ।

† ऋ० सं० ३, ६, २२, ४ ।

किङ्कारणम्? "सः" हि पूषा "अदन्तकः"। आह,—कुत एतत्? इति उच्यते,—"अदन्तकः पूषा—इति च ब्राह्मणम्"। (प्राशित्र-भागब्राह्मणे हि श्रूयते,—"तत् पूष्णे पर्य्यजहुः, तत् पूषा प्राश्नात्, तस्य दतो निर्जघान; * तस्मादाहुः,—अदन्तकः पूषा"—इति †)। यत् पुनरेतदुक्तं सन्निधिसामर्थ्याद् भगः करूलती स्यादिति। अकारण मेतत्;—"यस्य येनार्थसम्बन्धो दूरस्थ मपि तस्य तत्। अर्थतो ह्यसमर्थाना मानन्तर्य्य मकारणम्"—इति न्यायविदः पठन्ति॥ तस्मात् पूषैव 'करूळती'—इत्युच्यते‡, शब्दसारूप्या-दर्थोपपत्तेश्चेति॥

"दनः(१२४)"—इति §, अनवगतम्। "दानमनसः"—इत्यवगमः। "दनो विशं इन्द्र ०——० कुत्साय रन्धीः" ‖। अगस्त्यस्यार्षम्। हे 'इन्द्र!' 'दनः' "दानमनसः" एव एतान् अस्मभ्यं 'विशः' "मनुष्यान्", "कुरु" 'मृध्रवाचः' "मृदुवाचः"। कस्मात् पुनरेव मुच्यते? इतः,—'यत्' यस्मात् त्वम् 'सप्त' सप्ताः, 'पुरः' मेघपुरः, 'शारदीः' शरत्कालोत्थाः, संवत्सरोत्था वा; संवत्सरोऽपि हि शरदित्यु-च्यते,—"स जीव शरदः शतम्"—इति ¶ लिङ्गात्। 'शर्म' सुख मिच्छन्

---

* ब्राह्मणग्रन्थे तु इह 'तथेनूनं तदास"—इत्यधिकं दृश्यते।

† श० प० ब्रा० मु० ७२ पृ०। बन्धनीचिह्नान्तर्गतपाठस्तु क-पुस्तके नास्ति।

‡ 'करूलती'—शब्दः प्रातिशाख्यशासनात् संहितापाठे 'करूळती' भवति; इत्थं यत्र यत्र प्रतीकत्वेन गृहीतः, तत्र तत्राप्येव मेव, नान्यत्र।

§ १अा० ४५६ पृ० ५पं०।

‖ दनो विशं इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त्। ऋणोरपो अनव-द्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः॥"—इति ऋ० सं० १, ४, ९, २।

¶ सा० म० ब्रा० १, ५, १६।

जनानां 'दर्त्' दारयसि । किञ्च; 'अनवद्यार्णाः' अनवद्योदकाः, ताः पुरः 'ऋणोः' अपगमितवानसि इमं लोकं प्रति 'अपः' । स्वभाव एवैष तव लोकाननुगृह्णीतु मित्यभिप्रायः । किञ्च; "यूर्ने वृचम्" । यौतिः स्तुत्यर्थः * । स्तोत्रे यजमानाय 'पुरुकुत्साय' बहुस्तुतिकर्त्रे 'वृचं' धनं † 'रन्धीः' सम्पादितवानसीत्यर्थः । यत एव सुपकारे प्रवृत्तो भवान् स्तोतृणा मन्येषाञ्च जनानाम्, तस्माद् ब्रूमोऽस्माक मपि एतान् मृदुवाचः कुरु मनुष्यानिति ॥ एव मत्र 'दनः'—इत्यस्मिन् पदे दकारे "दानमनसः"—इति एतान्यक्षराण्यध्याहृतानि भाष्यकारेण, 'न'-कारस्यास्मद्योगे विभज्योदाहृतः; तथार्थोपपत्तिदर्शनात् । "कुरु"—इत्येतच्चार्थपरिसमाप्त्यर्थं मध्याहृतम् । उत्तरास्त्रयः पादा हेतुभावेन; 'सप्त यत् पुरः'—इत्येतस्मात् सर्वनामसम्बन्धात् ॥

"शरारुः (१२५)"—इति ‡, अनवगतम् । "संशिशरिषुः"—इत्यवगमः । "अवीरा मिव ०——० दिन्द्र उत्तरः" § । पङ्क्तिः । ऐन्द्री । इन्द्रपत्नी एवं ब्रवीति,—'अवीरा मिव' "अबला मिव" अपरिग्रहा मिव । 'माम् अयं' 'शरारुः' "बालः" मूर्खः "संशिशरिषुः" संशर्त्तु मिच्छन् शरीरं तित्यक्षु रित्यर्थः । 'अभि मन्यते' अभिभविष्याम्येता मित्येव मन्यते; क्षुद्रया बुध्या । नहुषो ऽन्यो वा कश्चित्;

---

* १भा० २२१ पृ० ३ श्व० १४ ख० (२७) ।

† १भा० २२२ पृ० २ श्व० १० ख० (२७) ।

‡ १भा० ४५९ पृ० ७पं० ।

§ "अवीरा मिव मा मयं शरारु रभि मन्यते । उताह मस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥"—इति ऋ० सं० ८, ४, १, ४ ।

"नहुषेण हीन्द्राणीमभिभवितु मारब्धासीत्"—इत्याख्यानं श्रूयते *। "उताह मस्मि वीरिणी" अथ च तावदस्मि वीरिण्येव। केन च पुनर्वीरेण वीरिणी? 'इन्द्रपत्नी' इन्द्रस्याहं पत्नी;—'मरुत्सखा' यः 'इन्द्रः' 'विश्वस्माद्' सर्वस्माद् यश्च 'उत्तरः' 'जगतः' उद्यततरः प्रभावेन, स मे वीरः; तदयं वालो न मन्यते, येन मा मभिभवितु मिच्छतीत्यभिप्रायः॥ एव मत्र "शरारुः= संशिशरिषुः", शब्दसारूप्यादर्थोपपत्तेश्च॥

"इदंयुः(१२९)"—इति †, अनवगत मनेकार्थञ्च। इद मिति यत् किञ्चिदभिप्रेतं निर्दिश्यते, तद्यः कामयते, स इदंयुरित्युच्यते। 'युः'—इत्येष शब्दोऽप्रसिद्धः कामयतेऽर्थे, तेनानवगत मेतत् स्यात्। "नानाधियो वसूयवः"—इत्यनेन ‡ गतार्थं मन्यमानो भाष्यकारो निगमं न ब्रवीति। वार्त्तिककारेणाप्युक्तम्,—"निगमवशादुत्कर्षं भवति पदम्"; तद्धितः, तथा धातुः, उपसर्गगुणः, निपाताश्च मन्त्रगताः सर्वथा लक्ष्याः॥

"अथापि" 'युः'—इत्येषः, "तद्वदर्थे भाष्यते"। आह,—कि मुदाहरणम्? "वसूयुरिन्द्रः"—इति, वसुमानित्यर्थः। "इन्द्रो अश्रायि ०——० प्रयन्ता" §। सख्यत्व मापन्नस्येन्द्रस्येय मार्षम् ‖।

---

* "वृषाकपिर्नामेन्द्रस्य पुत्रः, स चेन्द्राणीन्द्रश्चेते त्रयः संहताः संविवादं कृतवन्तः"—इति तत्रैव सूक्तारम्भे सा० भा०।

† १भा० ४५६पृ० १२पं०।

‡ पृ० १५५पृ० ८पं०।

§ "इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः। अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता॥"—इति ऋ० सं० ९,४,११,४।

‖ "अङ्गिरा इन्द्रतुल्यं पुत्र मिच्छन्नभ्यध्यायत्, सव्य इतीन्द्र एवास्य पुत्रोऽजायतेति॥"—इत्यनुक्रमणी।

ऐन्द्री। त्रिष्टुप्। दशरात्रस्य सप्तमेऽहनि मरुत्वतीये शस्यते। यः 'इन्द्रः' 'अश्राथि' शृणाति, हिनस्तीत्यर्थः। 'शृध्नुः' शृध्नुविक्रमः, अजिह्मयोधी ; अथ वा शोधयिता योधानां प्रहारैः, सुधीर्वा स्यात्*। क्व पुनः शृणाति? 'निरेके' सङ्ग्रामे यत्रैकोऽप्यन्यः सहायो नास्ति, तत्र एक एव शत्रून् हन्ति। 'पज्रेषु' प्रार्जितायुधेष्वपि पदेषु सङ्ग्रामेषु। किञ्च; 'स्तोमो न' स्तोम इव। यः प्रधानः त्रिवृत् स्तोमः, पञ्चदश इति हि व्यपदेशः ; सोमे प्रभवति स्तोमेन तस्य प्राधान्यात्†। किञ्च; यः इन्द्रः 'दुर्यो न' दुर्य 'इव यूपः' यः प्रधानः। तस्य किम्? इति,— स इन्द्रः 'अश्वयुः' अश्वैस्तद्वान्। 'गव्युः' गोभिः तद्वान्। 'वसूयुः' अन्नैर्वसुभिः तद्वान्। एवङ्गुणविशिष्टो 'यः इन्द्रः', सः 'रायेषु' धनेषु जनानां दातव्येषु 'क्षयति' इष्टे। 'प्रयन्ता' प्रकर्षेण दातेत्यर्थः‡॥ एव मन्त्र 'वसूयुः'—इत्ययं यु-शब्दः "तदर्थे"। किङ्कारणम्? न हीन्द्रो वसु कामयते, सुपूर्णत्वात्; परिशेषात् अयं "तदर्थे भाष्यते"—इत्युपपद्यते ॥ २ (३१)॥

किं ते॑ कृण्वन्ति॒ कीक॑टेषु॒ गावो॒ नाशिरं॑ दु॒ह्रे न त॑पन्ति घ॒र्म्मम्। आ नो॑ भर॒ प्रम॑गन्दस्य॒ वेदो॑ नैचाशा॒खं म॑घवन्रन्धया नः। किं ते कुर्वन्ति कीकटेषु गावः कीक-

---

* मूले तु "सुध्यः"—इति पाठः। "धीरितिकर्मनाम शोभना धीर्येषाम्"—इति च सायणः।

† ताण्ड्यद्वितीयतृतीयाध्यायौ द्रष्टव्यौ।

‡ "रायः" इति मूलपाठः। "रायः प्रयन्ता, धनस्य दाता; 'इन्द्र इत्' इन्द्र एव यजमानानाम्"—इत्याह च सायणः।

टा नाम देशोऽनार्यनिवासः कीकटाः किं कृताः किं क्रियाभिरिति प्रेप्सा वा नैव* चाशिरं दुह्रे न तपन्ति घर्मं हर्म्यं माहर नः प्रमगन्दस्य धनानि मगन्दः कुसीदी माङ्गदो मा मागमिष्यतीति† च ददाति तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः‡ प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः पण्डको वा पण्डकः पण्डगः§ प्रार्दको वा प्रार्दयत्याण्डावाण्डावाणी इव व्रीडयति|| तस्तम्भे¶ नैचाशाखं नीचाशाखो नीचैःशाखः शाखाः शक्नोतेराणिररणात्तन्नो मघवन्रन्धयेति रध्यतिर्वशगमने बुन्द इषुर्भवति (बुन्दो वा**) भिन्दो वा भयदो वा भासमानो द्रवतीति वा ॥४ (३२)॥

"कीकटेषु(१२७)"—इति††, अनवगतम्। "किङ्कृताः"—इति शब्दसमाधिः, "किं क्रियाभिः—इति" "वा"। "किं ते कृण्वन्ति०——० रन्धया नः"‡‡। विश्वामित्रस्यार्षम्। ऐन्द्री। त्रिष्टुप्।

---

* "किं क्रियाभिरभिप्रेप्सा नैव" क, ख, ग।

† "माङ्गदो मां गमिष्यन्तीति" क, ख, ग।

‡ "प्रमगन्दोऽत्यन्तः कुसीदः कुलीनः" क, ख, ग।

§ "पन्नकः" क, ख। "पन्नगः" ग।

|| "व्रीलयति" क, ख, ग।

¶ "तस्थं" क, ख, ग। वृत्तिसम्मतञ्च।

** नास्त्येष पाठः क-ख-ग-पुस्तकेषु।

†† १भा० ४५७पृ० २प०।

‡‡ ऋ० सं० ३, ३, २१, ४।

इन्द्र! याः 'कीकटेषु' अनार्यदेशनिवासिषु मनुष्येषु 'गावः', ताः 'ते' तव 'किम्' क मुपकारं कुर्वन्ति? न कञ्चिदपीत्यभिप्रायः। "नाशिरं दुह्रे, न तपन्ति घर्मम्" नाप्याशिरार्थं दुह्यन्ते, नापि घर्मे तप्यामानेऽङ्गभावं गच्छन्ति; नाप्यग्निहोत्रादिषु कर्मसु अन्यास्वपि क्रियास्वित्यभिप्रायः। यत एव मतो ब्रूमः,—"आ हर नः" ताः गाः; वयं तव, ताभिराशिरादिविनियोगेनोपकारं करिष्याम इत्यभिप्रायः। किञ्च; यदप्येतत् 'प्रमगन्दस्य' वृद्धिजीविनो धनम्, एतच्च तथा अस्मभ्य माहर; तदपि न क्रियासु "तत्स्थं" विनियुज्यते, वयं तद् विनियोक्ष्याम इत्यभिप्रायः। "प्रमदको वा" नित्यप्रमुदितो विषयपरः प्रमगन्दः स्यात्। "पण्डको वा" नपुंसकः प्रमगन्दः स्यात्। तयोर्वा धनानि क्रियासु न विनियुज्यन्ते, शब्दसारूप्यञ्च प्रमगन्दशब्दे उभयोरस्ति; तस्मात् तावप्युपद्येते। "नैचाशाखं मघवन्रन्धया नः"। यदेतेषा मन्यतमस्य नीचशाखाप्रसूतस्य नीचवंशप्रसूतस्य हीनतुल्यस्य धनम्, तत्*। हे 'मघवन्!' शीघ्रं 'रन्धय' संसाध अस्मद्वशं कुर्वित्यर्थः॥

एव मत्र 'कीकटाः' "किं कृताः" किं ते कृताः? इत्येव मभिव्याहार मर्हन्ति, न तैः कश्चिदर्थोऽस्ति; न ते देवपितृमनुष्याणा मुपकारं कुर्वन्तीत्यर्थः। अथ "वा" "किं क्रियाभिः?"—"इति" एवं "प्रेप्साः" ते नास्तिका एवमभिप्राया इत्यर्थः।

---

* नीचास्तु शूद्रयोनिषूत्पादिता शाखा पुत्रपौत्रादिपरम्परा येन स नीचाशाखः। * * *। तत्सम्बन्धि धनं नैचाशाखम्॥"—इति अत्रैव सा० भा०।

एतस्माच्छन्दसारूप्यादर्थोपपत्तेश्च "कीकटाः = अनार्यदेशनिवासिनः" —इत्युपपद्यते * ॥

"मगन्दः = कुसीदी"—इत्युच्यते ; स हि "माम्"—इयात् अद्यतनोऽर्थः, अयञ्च "आगमिष्यति"—इत्येव मनुचिन्त्य, परेभ्यो धनानि "ददाति"। "तदपत्यं प्रमगन्दः, अत्यन्तकुसीदिकुलीनः" तद्धितार्थे प्रः, प्रमगन्दः ; 'प्रस्कण्वस्य'—इति † यथा। "प्रमदकः" प्रमादशीलः ;—"अय मेवैको लोकोऽस्ति, न परः"—"इति" एवं "प्रेप्सुः" नास्तिकः। "पण्डकः" तृतीया प्रकृतिः ; स हि "पण्डगः" पण्डं गच्छति, स्त्रीरूपत्वात्। "प्रार्दकः"—इति "वा" स्यात् ; "प्र" प्रकर्षेण ह्यसौ "अर्दयति" अज्ञानैः सह स्त्रीत्वेन गच्छति "आण्डौ"। कस्मात् तौ "आण्डौ"? "आणी इव व्रीडयति" ; तौ ह्यसौ पण्डको मुखे पुनर्मैथुने कर्मणि वर्द्धमानः "आणी इव व्रीड़यति" सम्भ्रमतीत्यर्थः ‡ ॥

"बुन्दः(१२८)"—इति §, अनवगतम्। "इषुर्भवति"—इत्यभिधेयवचनम्। "भिन्दो वा भयदो वा भासमानो द्रवतीति वा"—इति शब्दसमाधयः ॥ ४ (३२) ॥

---

* कीकटो मगधः। तथाहि—"कीकटेषु गया पुण्या, पुण्यं राजगृहं वनम्। च्यवनस्याश्रमः पुण्यो, पुण्या नदी पुनःपुना ॥"—इति शब्दकल्पद्रुमधृतं वायुपुराणवचनम्।

† प्रस्कण्वः = काण्वः ऋ० सं० १. ४४—५० ; ८. ४९; ९. ९५।

‡ "शाखाः शक्नोतेः"—इत्यादि भाष्य मयाख्यात मेव खिलम्।

§ १मा० ४५७ पृ० ९पं०।

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ॥
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥
तुविक्षं बहुविक्षेपं* महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्यय† उभौ ते बाहू (रण्यौ ‡) रमणीयौ साङ्ग्राम्यौ वर्दुपे§ अर्दनपातिनौ गमनपातिनौ (शब्दपातिनौ दूरपातिनौ ||) वा मर्म्मण्यर्दनवेधिनौ गमनवेधिनौ (शब्दवेधिनौ दूरवेधिनौ ¶)वा ॥ ५ (३३)॥

"तुविक्षं ते ०——० ऋदूवृधा"—इति**। "निराविध्य ०——०खाततम्"—इति"†† च। कुरुस्तुतेरार्षमेतद्द्वयम्। ऐन्द्री। सतोबृहती पूर्वा; गायत्र्युत्तरा। हे इन्द्र! 'तुविक्षं' "बहुविक्षेपम्" बहूनां विक्षेपाणां——,'सुकृतं' शोभनानि हि येन कर्माणि क्रियन्ते तम्; अथ वा शोभनं कृतम्, 'सूमयं' च सुखकरं सुहृदाम्। किम्पुनस्तत्? 'धनुः'। किञ्च; "साधुर्बुन्दो हिरण्ययः" 'साधयिता' स्तोमानां शत्रुसङ्घातानां वा 'बुन्दः' इषुः "हिरण्ययः" हिरण्यविकृत इत्यर्थः। किञ्च; 'उभा ते बाहू' उभावपि ते बाहू, 'रण्या'

* "बहुविक्षं" क, ख, ग।
† "हिरण्मय" क, ख, ग।
‡ नास्त्येतत् क-ख-ग-पुस्तकेषु।
§ "साङ्ग्राम्यावृदूपे" क, ख ग।
||,¶ नेमौ पाठौ दृश्येते क-ख-ग-पुस्तकेषु।
** ऋ० सं० ६, ५, २०, ६।
†† ऋ० सं० ६, ५, २०, १।

"रमणीयौ" ख्यातौ पीनौ च, अथ वा "संक्राम्यौ" रणयोग्यौ, 'सुसंस्कृतौ' समलङ्कृतौ, 'ऋदूपे' "अर्दनपातिनौ" अर्दनेन हि गमनेन क्षेपणेन तौ शत्रून् पातयतः। 'ऋदूवृधा' ऋदिति मर्मोच्यते, तत्र यौ विध्येते तौ ऋदूवृधौ मर्मवेधिनावित्यर्थः। भाष्य मत्र न सम्यगिव लक्ष्यते; तस्य सम्यक् पाठोऽन्वेष्यः, ततो योज्यम् *। एव मत्र धनुःसम्बन्धाद् "बुन्दः = इषुः" ॥ ५ (३२) ॥

निराविध्यद्गिरिभ्य आ धारयत्पक्व मोदनम्। इन्द्रो बुन्दं स्वाततम् ॥ निरविध्यद्गिरिभ्य आ धारयत्पक्व मोदन मुदकदानं मेघम्। इन्द्रो बुन्दं स्वाततं वृन्दं बुन्देन व्याख्यातं वृन्दारकश्च ॥ ६ (३४) ॥

"निराविध्य०——० स्वाततम्" †। 'पक्वम्' बहूनां मेघानां मध्ये यः पक्वो मेघः, उदकदाने समर्थः, तम्, 'इन्द्रः' 'निरविध्यत्'। विद्धा च तावत् 'आ धारयत्' यावन्निरुदकः संवृत्त इति। कथं निरविध्यत्? इति,—'बुन्दं' 'स्वाततम्' स्वाकृष्ट माकर्णीकृत्वा। एव मत्राकर्षणसम्बन्धात् "इषुः = बुन्दः"—इत्युपपद्यते ॥

"वृन्दम्(१२९)"—इति ‡, एतत् पदम् "बुन्देन" एव "व्याख्यातम्"; अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दे ॥

---

* "एषा निरुक्त एक मपि पदं विहाय यास्केन व्याख्याता। तदेव लिख्यते ॥"—इति सा० भा०।

† ऋ० सं० ६, ५, २०, १।

‡ १भा० ४५७ पृ० ९पं०।

"वृन्दारकश्च" 'वृन्देन' एव "व्याख्यातः"। हस्ती वृन्दारकः प्रकरणवशाद्वान्यः कश्चित् * ॥ ६ (३४) ॥

अ॒यं यो होता॒ किरु॒ स य॒मस्य॒ क मप्यू॑हे॒ यत्स॑म॒ञ्जन्ति॑ दे॒वाः। अ॒हर॑हर्जायते मा॒सिमा॒स्यथा॑ दे॒वा द॑धिरे हव्य॒वाह॑म्॥ अयं यो होता कर्त्ता स यमस्य कमप्यन्न† मभिवहति यत्समश्नुवन्ति देवा अहरहर्जायते मासेमासेऽर्द्धमासेऽर्द्धमासे वाथ देवा निदधिरे हव्यवाह मुत्थ मूर्खौ।तेईंशोतेवा। महत्तदुत्थं स्थवि॑रं॒ तदा॑सी॒-दित्यपि निगमो भवत्यृबीस मपगतभास मपहृतभास मन्तर्हितभासं ‡ गतभासं वा ॥ ७ (३५) ॥

"किः(१२०)"—इति §, अनवगतम्। "कर्त्ता"—इत्यवगमः। "अ॒यं यो होता॒०——० हव्य॒वाह॑म्"॥। ऋचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्¶, तत्रेयं विश्वेदेवाना मार्षम्। आग्नेय्यौ।

---

* अम० को० १, १, ९; ३, १, ११२; ३, ३, १६। "वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु"—इति मेदिनी।

† "क मप्यूहेऽन्न" ङ, च।

‡ "मनन्तर्हितभासं" क, ख, ग।

§ १भा० ४५७ पृ० १९ पं०।

|| ऋ० सं० ८, १, १२, २।

¶ अत्राह सायणः,—"सूक्तत्रयोक्तार्थं तैत्तिरीयब्राह्मणम्। 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्, ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वावस्य आर्त्तिमा रिष्यतीति स निलायत सोऽपः प्राविशत् तं देवाः प्रैष मैच्छन्नित्यादि (तै० सं० २. ६. ६.)।

'यः अयम्' अग्निः, 'होता' आह्वाता देवानां पृथिवीस्थानः। किं तस्य? इति—'किः उ सः' 'यमस्य' भगवत आदित्यस्य ; अग्नेर्हि सकाशात् प्रातरादित्यः प्रसूयते। तदुक्तम्,—"एष प्रातः प्रसुवति, तस्मात् प्रातर्वोपतिष्ठन्त इति *। "यस्मिन् वृक्षे सुपलाशे (ऋ० सं० ८,७,२३,१.)"—इत्यस्या मृचि यमल मादित्यस्य वक्ष्यति †। किञ्च ; 'कम् अपि ऊहे' "क मप्यन्नम् अभिवहति"। "कम्"—इत्यन्ननाम ‡, अन्न मपि चाय मेवाभिवहति। कतमत्? 'यत्' एतत् हविर्लक्षणं 'समञ्जन्ति' "समश्नुवन्ति" 'देवाः'। अञ्जतिरत्र प्रकरणवशाद् भोजनार्थः। किञ्च ; अय मेव 'अहरहः' अहन्यहनि अग्निहोत्रिणां गृहेषु उद्बोध्यमानो महान् 'जायते'। 'मासिमासि' जायते पितृयज्ञेषु, "अर्द्धमासे ऽर्द्धमासे" च दर्शपूर्णमासेषु च। यस्मादेवङ्गुणविशिष्टो ऽय मग्निः, 'अथ' एतस्मात् कारणात् एत मग्निं सर्वे 'देवाः' 'दधिरे' "निदधिरे" 'हव्यवाहम्' हविषां वोढार मित्यर्थः। एव मत्र शब्दसारूप्याद् 'यमस्य'-इत्येतस्माच्च षष्ठीयोगात् 'किः'-इत्यस्य "कर्त्ता"-इत्येष विपरिणाम उपपद्यते॥

"उल्बम्(१२१)"—इति §, अनगतम्। 'जरायु'—इत्यवगमः। "ऊर्णोतेः"—इति धातुनिर्द्देशः। 'ऊर्णम्'—इति स्यात्। "वृणोतेर्वा" स्यात् ; तेन हि गर्भ आवृतो भवति। "महत्तदुल्वं ०——० स्तन्वो

---

* "अग्निर्वैश्वानरः प्राच्यावयत्, तस्य यद्रेतसः प्रथम मुद्दीप्यत, तदसावादित्यो-ऽभवत्"—इति च ऐ० ब्रा० ३, ३, १०।

† प० दै० का० ११, ३, ८।

‡ १भा० ४७९ पृ० (१४) द्रष्टव्यम्।

§ १भा० ४५८ पृ० ३पं०।

देव एकः" *। 'महत्' परिमाणतः, 'तत्' 'उल्बं' जरायु 'आसीत्', 'स्थविरं' चिरन्तनञ्च तदासीत्। येन त्वम् 'आवेष्टितः' आवृतः, हे भगवन्! अग्ने! 'प्रविवेशिथ' प्रविष्टवानसि 'पूर्वम्' आदिसर्गे 'अपः'। किञ्च; 'विश्वाः' सर्वा तन्वः तव, हे 'जातवेदः!' 'बहुधा' अनेकेषु अभिधानेषु वर्त्तमानाः अपश्यत् 'एकः देवः' प्रजापतिः, कोऽन्यस्ततः तव तनूना मन्तं वेत्तु मर्हतीत्यभिप्रायः॥ एवं मत्र 'जरायु' 'उल्ब'-शब्देनोच्यते, आवेष्टनसम्बन्धादित्युपपद्यते॥

"ऋबीसम्(१२१)"—इति †, अनवगतम्। "अपगतभासम्"—इत्येवमाद्याः शब्दसमाधयः। 'पृथिवी'—अभिधेया; सा हि कृष्ण-च्छाया ‡। तस्मादपगतभास मित्येवमाद्याः शब्दसमाधय उपपद्यन्ते॥ ७ (३५)॥

हिमेनाग्निं घ्रंस मवारयेथां पितुमती मूर्ज्ज मस्मा अधत्तम्। ऋबीसे अत्रि मश्विनावनीत मुन्निन्यथुः सर्वगणं स्वस्ति॥ हिमेनोदकेन ग्रीष्मान्तेऽग्निं घ्रंस मह-र्वारयेथा मन्नवतीं चास्मा § ऊर्ज्ज मधत्त मग्नये योऽय मृबीसे पृथिव्या मग्निरन्तरौषधिवनस्पतिष्वप्सु त मुन्नि-न्यथुः सर्वगणं सर्वनामानं गणो गणनाद्गुणश्च यद्दृष्ट

* "महत्तदुल्बं स्थविरं तदासीद्येनाविष्टितः प्रविवेशिथापः। विश्वा अपश्यद् बहुधा ते अग्ने जातवेदस्तन्वो देव एकः॥"—इति ऋ० सं० ८, १, १०, १।
† १भा० ४५८ ० ७पं०।
‡ "कृष्णच्छाया" क। "ऋबीसे = अपगतप्रकाशे, पीडायन्त्रगृहे"—सा०भा०।
§ "त्वास्मा" ग।

**ओषधय उद्यन्ति प्राणिनश्च पृथिव्यां तदश्विनो रूपं तेनैनौ* स्तौति स्तौति ॥ ८ (३६) ॥**

## ॥ इति षष्ठाध्यायस्य षष्ठः पादः ॥ ६. ६.

"हिमेनाग्निं ०——० सर्वगणं स्वस्ति"†। कक्षीवत आर्षम्। त्रिष्टुप्। आश्विनी। प्रातरनुवाकाश्विनयोः शस्यते। हे अश्विनौ! 'हिमेन' "उदकेन" अतिप्रवृद्धं "ग्रीष्मान्ते", 'अग्निम्', 'घ्रंसम्' "अह्नः"-लक्षणम्, इमांल्लोकान् दिधक्षन्त मिव, युवाम् 'अवारयेथाम्'। वारयित्वा च 'पितुमतीम्' "अन्नवतीम्" पुरोडाशाद्यन्नसहिताम्, 'ऊर्जम्' आज्यलक्षणाम्, युवाम् 'अधत्तम्' 'अस्मै' अग्नये हविर्भाजे; वर्षानुग्रहपूर्विकया ओषधिनिष्पत्त्या। किञ्च; "ऋबीसे अत्रि मश्विनावनीतम्" युवा मेव हे 'अश्विनौ!' "योऽयम्" 'ऋबीसे' "पृथिव्याम्" अग्निरनुप्रविष्टोऽन्तः, येनेमानि पृथिवीगर्भेषु उपनिहितानि तिन्दुकादीनि पच्यन्ते, य मवेक्ष्योक्तम्,—"ऋबीसपक्वं नाश्नीयात्" इति। 'तम् उत् निन्यथुः' युवाम्, ओषध्याद्यन्तर्वर्त्तिन मोषध्यादिरूपेणैव। 'सर्वगणं' "सर्वनामानम्" अग्निरेव ह्यय मनेनौषध्यादिरूपेणावस्थितः, सर्वैर्नामभिः अभिधीयते, अग्नेः सर्वोत्पत्तिदर्शनात्‡। कम्पुनरर्थं पुरोधाय उन्निन्यथुः? इति,—

---

* "तेनैनौ" क, ख, ग।

† ऋ० सं० १, ८, ९, २।

‡ "अग्निर्वै देवयोनिः, सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भूय हिरण्मशरीर ऊर्द्ध्वः स्वर्गंलोक मेष्यतीति"—इति, "अग्निः सर्वा देवताः"—इति च ऐ० ब्रा० २, १, ३।

'स्वस्ति' स्वस्त्ययनायास्य जगतः; श्रोषध्याद्यभावेन हि सर्वं मेव जगदभङ्क्ष्यत ॥ एव मत्र 'ऋबीस'-शब्देन "पृथिवी"—इत्युच्यते ॥

"गणः, गणनात्"; स हि गण्यते बहुसंयोगात्। "गुणश्च" गुणोऽपि गणनादेव; असावपि हि गण्यत एव,—द्विगुणः, त्रिगुणः इति। निगमप्रसक्त मेतदुक्तम् ॥

अधुनास्य मन्त्रस्य भाष्यकारः समस्तार्थ माह,—"यद् वृष्ट श्रोषधयः उद्यन्ति प्राणिनश्च पृथिव्याम् तदश्विनो रूपम्" सोऽश्विनोरधिकारः, तदश्विनोर्माहाभाग्यम्। "तेन" माहाभाग्यलक्षणेन रूपेण "एतौ" अश्विनौ मन्त्रदृक् "स्तौति" * ॥ ८ (३६) ॥

इति निरुक्तवृत्तौ एकादशाध्यायस्य (षष्ठाध्यायस्य † )
षष्ठः पादः ॥ ६,६ ॥

इति श्रीजम्बूमार्गाश्रमवासिनः आचार्य-भगवद्दुर्गस्य कृतौ
ऋज्वर्थायां निरुक्तवृत्तौ
एकादशोऽध्यायः (षष्ठोऽध्यायः ‡ ) समाप्तः ॥ ६ ॥

---

* "अत्रेद माख्यानम्।—अत्रि ऋषि मसुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निनाबाधिषत। तदानीं तेन ऋषिणा स्तुतावश्विनावग्निं मुदकेनोपशमय्य तस्मात् पीडायन्त्रगृहादविकलेन्द्रियवर्गं ऋषिं निरगमयता मिति॥"—इति लघ्वेव ऋ० भा०।

†, ‡ २भा० १४६पृ० "¶" द्रष्टव्यम्।

(त्वमग्नेऽस्वात्तृणउद्वृहाऽऽजासउपलप्रक्षिणीकारूरह-
मस्मेतेश्रायन्तइवाश्र्वंहिसोमानमिन्द्रासोमाद्धग्णुघतां-
श्रध्वरेऽस्तिहिवोऽस्वर्त्तेप्रवोच्छास्टप्रस्तुञ्जेतुञ्जेये। श्रस्मा-
श्रस्माइदुतन्नस्तुरीपंहिनोतामचोमात्वानपापासोयवं-
वृकेणजीवान्नोवतोधेनुंनोऽरायिकाणेवामंवामं किन्तेतु-
विक्षन्तेनिराविध्यदयंयोहिमेनाग्निं षट्त्रिंशत्॥ *)

॥ इति निरुक्ते पूर्वषट्के षष्ठोऽध्यायः ॥ ६ ॥

(यावन्तो मन्त्राः सर्वशाखासु, तेषु यानि, गुणपदानि लक्षणो-
द्देशतः, तानि सर्वाण्येव व्याख्यातानि॥ †)

(नैगमं काण्डं समाप्तम्)

॥ इति नैरुक्तपूर्वार्द्धः समाप्तः ‡ ॥



---

* २भा० १४६ पृ० "**" द्रष्टव्यम्।

† एषोक्तिश्च वृत्तिकृतोऽस्य दुर्गाचार्यस्यैव, परमध्यायसमाप्तिसूचकमितीत्यादि-
वाक्यादनन्तरमस्ति क-ग-घ-पुस्तकेषु; ख-पुस्तके तु दैवत-व्याख्यारम्भोपक्रमे; स एव
सम्यगित्यस्माकम्।

‡ क-ख-पुस्तकयोरेवैष [illegible] दृश्यते, अन्यत्र (ग-घ-ङ-च-पुस्तकेषु) न किमपि।

| | | Rs. | As. |
|---|---|---|---|
| | Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. .. .. | 12 | 0 |
| | Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. .. | 3 | 12 |
| | Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. | 0 | 10 |
| | Nizámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. | 2 | 0 |
| | Suyúṭy's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. .. | 8 | 12 |
| | Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| | Ditto (English) Fasc. I—XIV @ 1/ each .. .. | 14 | 0 |
| | Táríkh-i-Fírúz Sháhi, (Text) Fasc. I—VII @ /10/ each .. .. | 4 | 6 |
| | Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. | 5 | 10 |
| | Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. | 3 | 2 |
| | Zafarnamah, Fasc. I. .. .. .. .. .. | 0 | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

| | | Rs. | As. |
|---|---|---|---|
| 1. | Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. | 80 | 0 |
| | Ditto Index to Vols. I—XVIII .. .. | 5 | 0 |
| 2. | Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No. | | |
| 3. | Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers. | | |
| | *N. B. The figures enclosed in brackets give the number of Nos. in each Volume.* | | |
| 4. | Centenary Review of the Researches of the Society from 1784—1883 .. | 5 | 0 |
| 5. | General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. | 2 | 0 |
| 6. | Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A S. B., 1868) .. .. .. .. | 2 | 0 |
| 7. | Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. | 4 | 0 |
| 8. | Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. | 4 | 0 |
| 9. | A Grammar and Vocabulary of the Northern Balochí Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. .. | 4 | 0 |
| 10. | Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. | 2 | 0 |
| | Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. | 4 | 0 |
| 11. | Anis-ul-Musharrihi .. .. .. .. | 3 | 0 |
| 12. | Catalogue of Fossil Vertebrata .. .. .. | 2 | 0 |
| 13. | Catalogue of the Library of the Asiatic Society, Bengal .. .. | 3 | 8 |
| 14. | Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. | 2 | 0 |
| 15. | Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. | 1 | 8 |
| 16. | Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. | 1 | 0 |
| 17. | Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. | 32 | 0 |
| 18. | Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. | 2 | 0 |
| 19. | Khizánat-ul-'ilm .. .. .. .. .. | 4 | 0 |
| 20. | Mahábhárata, Vols. III and IV, @ 20/ each .. .. | [illegible] | 0 |
| 21. | Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. | 12 | 0 |
| 22. | Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. | 1 | 0 |
| 23. | Sharaya-ool-Islám .. .. .. .. .. | 4 | 0 |
| 24. | Tibetan Dictionary .. .. .. .. .. | 10 | 0 |
| 25. | Ditto Grammar .. .. .. .. | 8 | 0 |
| 26. | Vuttodaya, editedby Lt.-Col. G. E. Fryer .. .. .. | 2 | 0 |

| | Rs. | As. |
|---|---|---|
| Notices of Sanskrit Manuscripts, Fasc. I—XIX @ 1/ each .. | 19 | 0 |
| Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. | 5 | 0 |

| Title | Rs. | As. |
|---|---|---|
| Nárada Smṛiti (Sans.) Fasc. I .. .. .. | 0 | 10 |
| Nyáya Darśana, (Sans.) Fasc. I and III @ /10/ each .. .. | 1 | 4 |
| Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V | 2 | 8 |
| Pariśishṭaparvan (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Pingala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| Prithiráj Rásau, (Hindí) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Ditto (English) Fasc. I .. .. .. .. | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each .. .. | 1 | 4 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I .. .. .. | 1 | 8 |
| Parásara Smṛiti (Sans.) Fasc. I—III @ /10/ each .. .. | 1 | 14 |
| S'rauta Sútra of Ápastamba, (Sans.) Fasc. I—X @ /10/ each .. | 6 | 4 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /10/ each .. | 6 | 14 |
| Ditto Látyáyana (Sans.) Fasc. I—IX @ /10/ each .. | 5 | 10 |
| Ditto S'ánkháyana Fasc. I. (Sans.) .. .. .. | 0 | 10 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. .. .. .. | 23 | 2 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each .. .. | 2 | 8 |
| Sánkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each .. | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV .. .. .. .. | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II .. .. | 0 | 10 |
| S'ankara Vijaya, (Sans.) Fasc. II and III @ /10/ each .. .. | 1 | 4 |
| Sánkhya Pravachana Bháshya, (English) Fasc. III .. .. | 0 | 10 |
| Sánkhya Sára, (Sans.) Fasc. I .. .. .. | 0 | 10 |
| Suśruta Saṃhitá, (Eng.) Fasc. I and II @ 1/each .. .. | 2 | 0 |
| Taittiríya Áraṇya Fasc. I—XI @ /10/ each .. .. .. | 6 | 14 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each .. .. | 15 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc. I—XXXIII @ /10/ each .. .. | 20 | 10 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each .. | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya Svetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each .. .. .. .. | 1 | 4 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each .. .. | 11 | 14 |
| Tattva Chintámaṇi, Fasc. I & II (Sans.) @ /10/ each .. .. | 1 | 4 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each .. .. | 6 | 14 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—5, @ /10/ each Fasc .. .. .. .. .. | 6 | 14 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each .. .. | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each .. | 4 | 6 |
| The same, bound in cloth .. .. .. .. | 5 | 2 |

### *Arabic and Persian Series.*

| Title | Rs. | As. |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each .. | 8 | 2 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each .. .. | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) .. .. .. | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXX @ 1/4 each .. | 37 | 8 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each .. | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to., thick paper, @ 4/12; thin paper .. .. .. .. .. | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each .. .. .. .. .. | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each .. .. | 17 | 8 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each .. .. .. .. .. | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /10/ each .. .. | 5 | 10 |
| Ditto Azádí, (Text) Fasc. I—IV @ /10/ each .. .. | 2 | 8 |
| Haft Asmán, History of the Persian Mansawi (Text) Fasc. I .. | 1 | 0 |
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each .. .. | 6 | 0 |
| Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. | 1 | 14 |
| Iṣabáh, with Supplement, (Text) 37 Fasc. @ /12/ each .. .. | 27 | 12 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. | 3 | 2 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each .. | 9 | 6 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I & II @ 1/ each .. | 2 | 0 |

*(Turn over.)*